# अथ नारदस्मृतिः

इह हि भगवान्मनुः प्रथमं सर्वभूतानुग्रहार्थमाचारस्थितिहेतुभूतं शास्त्रं चकार । यत्र लोकसृष्टिर्भूतप्रविभागः सद्देशप्रमाणं पर्षल्लक्षणं वेदवेदाङ्गयज्ञविधानमाचारो व्यवहारः कण्टकशोधनं राजवृत्तवर्णाश्रम-विभागौ विवाहन्यायः स्त्रीपुंसविकल्पो दायानुक्रमः श्राद्धविधानं शौचाचारविकल्पो भक्ष्याभक्ष्यलक्षणं विक्रेयाविक्रेयमीमांसा पातक-भेदाः स्वर्गनरकानुवर्णनं प्रायश्चित्तान्युपनिषदो रहस्यस्थानानि । एवं चतुर्विंशतिप्रकरणानि १

तदेतदत्र श्लोकशतसहस्रेण साशीतिनाध्यायसहस्रेण च भगवान्मनुरूप-निबध्य देवर्षये नारदाय प्रायच्छत् । स च तस्मादधीत्य महत्त्वान्नायं ग्रन्थः सुकरो मनुष्यैरेव धारयितुमिति द्वादशभिः सहस्रैः संचिक्षेप तं च महर्षये मार्कण्डेयाय प्रायच्छत् २

स च तस्मादधीत्य तथैवायुःशक्तिमपेक्ष्य मनुष्याणामष्टभिः सहस्रैः संचिक्षेप तं च सुमतये भार्गवाय प्रायच्छत् ३

सुमतिरपि भार्गवस्तस्मादधीत्य तथैवायुर्ह्रासादल्पीयसी शक्तिर्मनुष्या-णामिति चतुर्भिः सहस्रैः संचिक्षेप ४

तदेतत्पितृमनुष्या ह्यधीयन्ते विस्तरेण शतसहस्रं देवगन्धर्वादयः ।

तत्रायमाद्यः श्लोकः

आसीदिदं तमोभूतं न प्राज्ञायत किं च न
ततः स्वयंभूर्भगवान् प्रादुरासीच्चतुर्मुखः ५

इत्येवमधिकृत्य क्रमात्प्रकरणात्प्रकरणमनुक्रान्तम्

तत्र प्रथमं प्रकरणं व्यवहारो नाम यत्रेमामादौ देवर्षिर्नारदः सूत्रीयां मातृकां चकार । अस्यायमाद्यः श्लोकः ६

धर्मैकतानाः पुरुषा यदासन् सत्यवादिनः
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः १
नष्टे धर्मे मनुष्याणां व्यवहारः प्रवर्तते
द्रष्टा च व्यवहाराणां राजा दण्डधरः स्मृतः २

लिखितं साक्षिणश्चैव द्वौ विधी परिकीर्तितौ
संदिग्धार्थविशुद्ध्यर्थं द्वयोर्विवदमानयोः ३
सोत्तरोऽनुत्तरश्चैव स विज्ञेयो द्विलक्षणः
सोत्तरोऽभ्यधिको यत्र विलेखापूर्वकः पणः ४
विवादे सोत्तरपणे द्वयोर्यस्तत्र हीयते
स एव हि पणं दाप्यो विनयं च पराजये ५
सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ६
कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः
प्रतिष्ठा व्यवहाराणां गुर्वेभ्यस्तूत्तरोत्तरम् ७
स चतुष्पाच्चतुःस्थानश्चतुःसाधन एव च
चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्यते ८
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च
त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा ९
धर्मश्च व्यवहारश्च चरित्रं राजशासनम्
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः १०
तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु
चरित्रं पुस्तकरणे सजाज्ञायां तु शासनम् ११
सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते
चतुर्णामाश्रमाणां च रक्षणात्स चतुर्हितः १२
कर्तॄनथो साक्षिणश्च सभ्यान् राजानमेव च
व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः १३
धर्मस्यार्थस्य यशसो लोकपंक्तेस्तथैव च
चतुर्णां करणादेषां चतुष्कारीति चोच्यते १४
राजा सत्पुरुषः सभ्याः शास्त्रं गणकलेखकौ
हिरण्यमग्निरुदकमष्टाङ्गः समुदाहृतः १५
ऋणादानं ह्युपनिधिः संभूयोत्थानमेव च
दत्तस्य पुनरादानमशुश्रूषाभ्युपेत्य च १६

वेतनस्यानपाकर्म तथैवास्वामिविक्रयः
विक्रियासंप्रदानं च क्रीत्वानुशय एव च १७
समयस्यानपाकर्म विवादः क्षेत्रजस्तथा
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसम् १८
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च
द्यूतं प्रकीर्णकं चैवेत्यष्टादशपदः स्मृतः १९
एषामेव प्रभेदोऽन्यो द्वात्रिंशदधिकं शतम्
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते २०
ऋणादानं पञ्चविंशति षडौपनिधिके स्मृताः
संभूयोत्थे त्रयो भेदाश्चतुर्दत्ताप्रदानके २१
नवभेदा अशुश्रूषा वेतनं स्याच्चतुर्विधम्
अस्वामिविक्रये तु द्वौ विक्रियादानमेकधा २२
क्रीत्वामुक्तं चतुर्भेदं समयाकार्यमेकधा
क्षेत्रवादो द्वादशधा स्त्रीपुंसोर्भेदविंशति २३
दायभागे तु एकोना भेदा द्वादश साहसे
वाग्दण्डपारुष्ययोस्तु द्वयोर्भेदास्त्रयः स्मृताः २४
द्यूताह्वयं चैकभेदं षड्भेदं तु प्रकीर्णकम्
एवमेषां प्रभेदानां द्वात्रिंशच्छतमेव वै २५
कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्तते
त्रियोनिः कीर्त्यते तेन त्रयमेतद्विवादकृत् २६
द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः
शङ्का सतां तु संसर्गात्तत्त्वं होढादिदर्शनात् २७
पक्षद्वयाभिसम्बन्धाद्विद्वारः समुदाहृतः
पूर्ववादस्तयोः पक्षः प्रतिपक्षस्तदुत्तरम् २८
भूतच्छलानुसारित्वाद्विगतिः स उदाहृतः
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् २९
दिव्यान्यप्यप्रमाणानि नीयन्ते वाक्यवञ्चकैः
देशकालप्रमाणादावप्रमादो भवेदतः ३०

तत्र शिष्टं छलं राजा मर्षयेद्धर्मसाधनः
भूतमेव प्रपद्येत धर्ममूला यतः श्रियः  ३१
धर्मेणोद्धरतो राज्ञो व्यवहारान्कृतात्मनः
संभवन्ति गुणाः सप्त सप्त वह्नेरिवार्चिषः  ३२
धर्मश्चार्थश्च कीर्तिश्च लोकपंक्तिरूपग्रहः
प्रजाभ्यो बहुमानं च स्वर्गे स्यानं च शाश्वतम्  ३३
तस्माद्धर्मासनं प्राप्य राजा विगतमत्सरः
समः स्यात्सर्वभूतेषु विभ्रद्वैवस्वतं व्रतम्  ३४
धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः
समाहितमतिः पश्येद्व्यवहाराननुक्रमात्  ३५
आगमः प्रथमं कार्य्यो व्यवहारपदं ततः
चिकित्सा निर्णयश्चैव दर्शनं स्याच्चतुर्विधम्  ३६
धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन यत्नतः
संपश्यमानो निपुणं व्यवहारगतिं नयेत्  ३७
यथा मृगस्य विद्धस्य व्याधो मृगपदं नयेत्
कक्षे शोणितपादेन तथा धर्मपदं नयेत्  ३८
यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्  ३९
धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः
व्यवहारो हि बलवान्धर्मस्तेनावहीयते  ४०
सूक्ष्मो हि भगवान्धर्मः परीक्षो दुर्विचारणः
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत्  ४१
यात्यचौरोऽपि चौरत्वं चौरश्चायात्यचौरताम्
अचौरश्चौरतां प्राप्तो माण्डव्यो व्यवहारतः  ४२
स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु
व्यवहारः कृतोऽप्येषु पुनः कर्तव्यतामियात्  ४३
गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि
ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सया  ४४

गोभूहिरण्यस्त्रीस्तेयवाग्दण्डात्ययिकेषु च
साहसेष्वभिशापे च सद्य एव विवादयेत् ४५
अनावेद्य तु यो राज्ञे संदिग्धेऽर्थे प्रवर्तते
प्रसह्य स विनेयः स्यात्स चास्यार्थो न सिध्यति ४६
वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ४७
स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा
चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ४८
नदीसंतारकान्तारदुर्देशोपप्लवादिषु
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ४९
राजप्रत्यक्षदृष्टानि सुहृत्संबन्धिबान्धवैः
प्राप्तद्विगुणदण्डानि कार्याणि पुनरुद्धरेत् ५०
आसेधकाल आसिद्ध आसेधं यो व्यतिक्रमेत्
स विनेयोऽन्यथा कुर्वन्नासेधा दण्डभाग्भवेत् ५१
निर्वेष्टुकामो रेगार्तो यियक्षुर्व्यसने स्थितः
अभियुक्तस्तथान्येन राजकार्योद्यतस्तया ५२
गवां प्रचारे गोपालाः शस्यारम्भे कृषीबलाः
शिल्पनश्चापि तत्कालमायुधीयाश्च विग्रहे ५३
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती
विषमस्थश्च नासेध्यो न चैतानाह्वयेन्नृपः ५४
नाभियुक्तोऽभियुञ्जीत तमतीर्त्वार्थमन्यतः
न चाभियुक्तमन्येन न विद्धं बेद्धुमर्हति ५५
यमर्थमभियुञ्जीत न तं विप्रकृतिं नयेत्
नान्यत्पक्षान्तरं गच्छेद्गच्छन्पूर्वात्स हीयते ५६
न च मिथ्याभियुञ्जीत दोषो मिथ्याभियोगिनः
यस्तत्र विनयः प्रोक्तः सोऽभियोक्तारमाव्रजेत् ५७
सापदेशं हरन्कालमब्रुवंश्चापि संसदि
उक्ता वाचो विब्रुवंश्च हीयमानस्य लक्षणम् ५८

पलायते य आहूतः प्राप्तश्च विवदेन्न यः
विनेयः स भवेद्राज्ञा हीन एव स वादतः ५९
सम्यक्प्रणिहितं चार्थं पृष्टः स नोऽभिनन्दति
अपदिश्य च यो देश्यं पुनस्तमनुधावति ६०
सन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो दिशेन्न यः
एतैस्तु कारणैः सर्वैर्धर्महीनान्विनिर्दिशेत् ६१
निर्णिक्तव्यवहारेषु प्रमाणमफलं भवेत्
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ६२
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः
निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा ६३
अभूतमप्यभिहितं प्राप्तकालं परीक्षयेत्
यत्तु प्रमादान्नोच्येत तद्भूतमपि हीयते ६४
तीरितं चानुशिष्टं च यो मन्येत विधर्मतः
द्विगुणं दण्डमास्थाय तत्कार्य्यं पुनरुद्धरेत् ६५
दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः
न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते ६६
रागादज्ञानतो वापि लोभाद्वा योऽन्यथा वदेत्
सभ्योऽसभ्यः स विज्ञेयः तं पापं विनयेन्नृपः ६७
किं तु राज्ञा विशेषेण स्वधर्ममनुरक्षता
मनुष्यचित्तवैचित्र्यात्परीक्ष्या साध्वसाधुता ६८
पुरुषाः सन्ति ये लोभात्प्रब्रूयुः साक्ष्यमन्यथा
सन्ति चान्ये दुरात्मानः कूटलेख्यकृतो जनाः ६९
अतः परीक्ष्यमुभयमेतद्राज्ञा विशेषतः
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ७०
असत्याः सत्यसङ्काशाः सत्याश्चासत्यसंनिभाः
दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम् ७१
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव
न तलं विद्यते व्योम्नि न खद्योते हुताशनः ७२

तस्मात्प्रत्यक्षदृष्टोऽपि युक्तो ह्यर्थः परीक्षितुम्
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते ७३
एवं पश्यन् सदा राजा व्यवहारान् समाहितः
वितत्येह यशो दीप्तं प्रोत्याप्नोति त्रिविष्टपम् ७४
प्रथमोऽध्यायः १

सुनिश्चितबलाधानस्त्वर्थी स्वार्थप्रचोदितः
लेखयेत्पूर्वपक्षं तु कृतकार्यविनिश्चयः १
पूर्वपक्षश्रुतार्थस्तु धन्यर्थी तदनन्तरम्
पूर्वपक्षार्थसम्बन्धं प्रतिपक्षं निवेशयेत् २
श्वो लेखनं वा स लभेत्त्र्यहं सप्ताहमेव वा
अर्थी तृतीयपादे तु युक्तं सद्यो ध्रुवं जयी ३
मिथ्या संप्रतिपत्तिर्वा प्रत्यवस्कन्दमेव वा
प्राङ्न्यायविधिसाध्यं वा उत्तरं स्याच्चतुर्विधम् ४
मिथ्यैतन्नाभिजानामि मम तत्र न सन्निधिः
अजातश्चास्मि ततकाल एवं मिथ्या चतुर्विधम् ५
मिथ्या च विपरीतं च पुनःशब्दसमागमम्
पूर्वपक्षार्थसंबन्धमुत्तरं स्याच्चतुर्विधम् ६
भाषाया उत्तरं यावत्प्रत्यर्थी विनिवेशयेत्
अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ७
अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम्
लेख्यं हीनाधिकं भ्रष्टं भाषादोषास्तूदाहृताः ८
लब्धव्यं येन यद्यस्मात्स तत्तस्मादवाप्नुयात्
न त्वन्योन्यमथान्यस्मादित्यन्यार्थमिदं त्रिधा ९
मनसाहमपि ध्यातस्त्वन्मित्रेणेह शत्रुवत्
अतोऽनया महाक्षान्त्या त्वमिहावेदितो मया १०
द्रव्यप्रमाणहीनं यत्पुलाकाश्रयवर्जितम्
प्रमाणवर्जितं नाम लेख्यदोषं तदुत्सृजेत् ११

आगमवर्जितं दोषं पूर्ववादे विवर्जयेत्
एकस्य बहुभिः सार्धं पुरराष्ट्रविरोधकम् १२
बिन्दुमात्रविहीना वा पदवर्णविदुष्टा वा
हीनाधिका भवेद्व्यर्था तां यत्नेन विवर्जयेत् १३
भ्रष्टं तु दुःखितं यत्स्याज्जलतैलादिभिर्हतम्
भाषायां तदपि स्पष्टं विस्पष्टार्थं विवर्जयेत् १४
सत्या भाषा न भवति यद्यपि स्यात्प्रतिष्ठिता
बहिश्चेद्भ्रश्यते धर्मान्नियताद्व्यावहारिकात् १५
गन्धमादनसंस्थस्य मयास्यासीत्तदर्पितम्
व्यवहारिकधर्मस्य बाह्यमेतन्न सिध्यति १६
अन्याक्षरनिवेशेन अन्यार्थगमनेन च
आकुलं च क्रियादानं क्रिया चैवाकुला भवेत् १७
रागादीनां यदेकेन कोपितः करणं वदेत्
तदादौ तु लिखेत्सर्वं वादिनः फलकादिषु १८
राजकुलावबोधाय धर्मस्थैः सुविचारितम्
तस्मादन्यद्व्यपोह्यं स्याद्वादिनः फलकादिषु १९
वादिभ्यामभ्यनुज्ञातं शेषं च फलके स्थितम्
ससाक्षिकं लिखेयुस्ते प्रतिपत्तिं च वादिनोः २०
वादिभ्यां लिखिताच्छेषं यत्पुनर्वादिना स्मृतम्
तत्प्रत्याकलितं नाम स्वपादे तस्य लिख्यते २१
अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा
यो यस्यार्थे विवदते तयोर्जयपराजयौ २२
यो न भ्राता न च पिता न पुत्रो न नियोगकृत्
परार्थवादी दण्डाः स्याद्व्यवहारेऽपि विब्रुवन् २३
पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः २४
सर्वेष्वपि विवादेषु वाक्छलेनापहीयते
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते २५

अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम्
अभियोक्ता दिशेद्देश्यं प्रत्यवस्कन्दितो न चेत्  २६
पूर्वपादे हि लिखितं यथाक्षरमशेषतः
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत्  २७
क्रियापि द्विविधा प्रोक्ता मानुषी दैविकी तथा
मानुषी लेख्यसाक्षिभ्यां धटादिर्दैविकी स्मृता  २८
दिवा कृते कार्यविधौ ग्रामेषु नगरेषु वा
संभवे साक्षिणां चैव दिव्या न भवति क्रिया  २९
अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे
न्यासस्यापह्नवे चैव दिव्या संभवति क्रिया  ३०
कारणप्रतिपत्त्या च पूर्वपक्षे विरोधिते
अभियुक्तेन वै भाव्यं विज्ञेयं पूर्वपक्षवत्  ३१
पलायते य आहूतो मौनी साक्षिपराजितः
स्वयमभ्युपपन्नश्च अवसन्नश्चतुर्विधः  ३२
अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः  ३३
मणयः पद्मरागाद्या दीनारादि हिरण्मयम्
मुक्ताविद्रुमशंखाद्याः प्रदुष्टाः स्वामिगामिनः  ३४
गन्धमाल्यमदत्तं तु भूषणं वास एव वा
पादुकेति राजोक्तं तदाक्रामन्वधमर्हति  ३५
पण्यमूल्यं भृतिर्न्यासो दण्डो यच्चावहारकम्
वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः  ३६
मिथ्याभियोगिनो ये स्युर्द्विजानां शूद्रयोनयः
तेषां जिह्वां समुत्कृत्य राजा शूले निधापयेत्  ३७
आज्ञा लेखः पट्टकः शासनं वा
आधिः पत्रं विक्रेयो वा क्रयो वा ।
राज्ञे कुर्यात्पूर्वमावेदनं यस्
तस्य ज्ञेयः पूर्वपक्षो विधिज्ञैः  ३८

साक्षिकदूषणे कार्यं पूर्वसाक्षिविशोधनम्
शुद्धेषु साक्षिषु ततः पश्चात्साक्ष्यं विशोधयेत्  ३९
साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः
स्वचर्यावसितानां तु नास्ति पौनर्भवो विधिः  ४०
स्वयमभ्युपपन्नोऽपि स्वचर्यावसितोऽपि सन्
क्रियावसन्नोऽप्यर्हेत परं सभ्यावधारणम्  ४१
पक्षानुत्सार्य तु सभ्यैः कार्यो विनिश्चयः सदा
अनुत्सारितनिर्णिक्ते विरोधः प्रेत्य चेह च  ४२
सभ्यैरेव जितः पश्चाद्राज्ञा शास्यः स्वशास्त्रतः
जयाने चापि देयं स्याद्यथावज्जयपत्रकम्  ४३
व्यवहारमुखं चैतत्पूर्वमुक्तं स्वयंभुवा
मुखशुद्धौ हि शुद्धिः स्याद्व्यवहारस्य नान्यथा  ४४
इति नारदीयमातृकायां द्वितीयोऽध्यायः  २

नानियुक्तेन वक्तव्यं व्यवहारे कथञ्चन
नियुक्तेन तु वक्तव्यमपक्षपतितं वचः  १
अनियुक्तो नियुक्तो वा शास्त्रज्ञो वक्तुमर्हति
दैवीं स वाचं वदति यः शास्त्रमनुजीवति  २
युक्तरूपं वदन् सभ्यो नाप्नुयाद्द्वेषकिल्बिषे
ब्रुवाणस्त्वन्यथा सद्यस्तदेवोभयमाप्नुयात्  ३
राजा तु धार्मिकान् सभ्यान्नियुञ्ज्यात्सुपरीक्षितान्
व्यवहारधुरं वोढुं ये शक्ताः सद्गवा इव  ४
धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः  ५
तत्प्रतिष्ठः स्मृतो धर्मो धर्ममूलश्च पार्थिवः
सह सद्भिरतो राजा व्यवहारान्विशोधयेत्  ६
शुद्धेषु व्यवहारेषु शुद्धिं यान्ति सभासदः
शुद्धिश्च तेषां धर्माद्धि धर्ममेव वदेत्ततः  ७

यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ८
विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ९
सभायां न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम्
अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी १०
ये तु सभ्याः सभां प्राप्य तूष्णीं ध्यायन्त आसते
यथा प्राप्तं न ब्रुवते सर्वे तेऽनृतवादिनः ११
पादोऽधर्मस्य कर्तारं पादः साक्षिणमृच्छति
पादः सभासदः सर्वान् पादो राजानमृच्छति १२
राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते १३
अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान्
परोक्षमर्थवैकल्याद्भाषते यः सभां गतः १४
तस्मात्सभ्यः सभां प्राप्य रागद्वेषविवर्जितः
वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत् १५
यथा शल्यं भिषग्विद्वानुद्धरेद्यन्त्रशक्तितः
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः १६
यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते
स निःशल्यो विवादः स्यात्सशल्यः स्यादतोऽन्यथा १७
न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र नो सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् १८

## ऋणादानाख्यं प्रथमं व्यवहारपदम्

ऋणं देयमदेयं च येन यत्र यथा च यत्
दानग्रहणधर्माभ्यामृणादानमिति स्मृतम् १

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः
विभक्ता अविभक्ता वा यो वा तामुद्धरेद्धरम् २
पितृव्येनाविभक्तेन भ्रात्रा वा यदृणं कृतम्
मात्रा वा यत्कुटुम्बार्थे दद्युंस्तद्रिक्थिनोऽखिलम् ३
क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम्
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ४
इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः
उत्तमर्णाधमर्णेभ्यो मामयं मोचयिष्यति ५
पूजनीयास्त्रयोऽतीता उपजीव्यास्त्रयोऽग्रतः
एतत्पुरुषन्तानमृणयोः स्याच्चतुर्थके ६
याच्यमानं न दीयेत ऋणं वापि प्रतिग्रहम्
तद्धनं वर्धते तावद्यावत्कोटिशतं भवेत् ७
कोटिशते तु सम्पूर्णे जायते तस्य वेश्मनि
ऋणसंशोधनार्थाय दासो जन्मनि जन्मनि ८
तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनां धनम् ९
न पुत्रर्णं पिता दद्याद्दद्यात्पुत्रस्तु पैतृकम्
कामक्रोधसुराद्यूतप्रातिभाव्यकृतं विना १०
पितुरेव नियोगाद्यः कुटुम्बभरणाय वा
ऋणं वा यत्कृतं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता ११
शिष्यान्तेवासिदासस्त्रीप्रेष्यकृत्यकरैश्च यत्
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिना १२
ग्राहको यदि नष्टः स्यात् कुटुम्बे च कृतो व्ययः
दातव्यं ज्ञातिभिस्तस्य विभक्तैरपि तदृणम् १३
नार्वाक् सम्वत्सराद्विंशात्पितरि प्रोषिते सुतः
ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा १४
दाप्यः परर्णमेकोऽपि जीवत्स्ववियुतैः कृतम्
प्रेतेषु न तु तत्पुत्रः परर्णं दातुमर्हति १५

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा
अभ्युपेतादृते यद्वा सह पत्या कृतं भवेत्  १६
दद्यादपुत्रविधवा नियुक्ता वा मुमूर्षुणा
यो वा तद्रिक्थमादत्ते यतो रिक्थमृणं ततः  १७
न च भार्याकृतमृणं पत्युर्वापि कथं भवेत्
आपत्कृतादृते पुंसां कुटुम्बार्थो हि दुस्तरः  १८
अन्यत्र रजकव्याधगोपशौरिडकयोषिताम्
तेषां तत्प्रत्यया वृत्तिः कुटुम्बं च तदाश्रयम्  १९
पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत्
तस्या द्रव्यं हरेत्सोऽन्यो निःस्वाया पुत्र एव तु  २०
या तु सप्रधनैव स्त्री सापत्या चान्यमाश्रयेत्
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम्  २१
अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम्
स आभजेदृणं वोढुः सैव तस्य धनं यतः  २२
धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत्
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः  २३
अन्तिमा स्वैरिणीनां या उत्तमा च पुनर्भुवाम्
ऋणं तयोः पतिकृतं दद्याद्यस्ते समश्नुते  २४
भार्या स्नुषा च भृत्या च भार्यायाश्च परिग्रहः
एतावद्भिर्ऋणं देयं भूमिं यश्चोपजीवति  २५
विभक्ता भ्रातरो ये स्युः पृथग्दारक्रियाधनाः
यो ह्यपुत्रो मृतस्तेषां तत्पत्नी तत्समश्नुते  २५-२
स्त्रीकृतान्यप्रमाणानि कार्यान्याहुर्मनीषिणः
विशेषतो गृहक्षेत्रदानाधमनविक्रयाः  २६
एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते
पुत्रः पत्युरभावे च राजा च पतिपुत्रयोः  २७
भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिनमृतेऽपि तत्
सा यथाकामश्नीयाद्द्याद्वा स्थावरादृते  २८

तथा दासकृतं कार्यमकृतं परिचक्षते
अन्यत्र स्वामिसंदेशान्न दासः प्रभुरात्मनः २९
पुत्रेणापि कृतं कार्यं यत्स्यादच्छन्दतः पितुः
तदप्यकृतमेवाहुर्दासः पुत्रश्च तत्समौ ३०
अप्राप्तिव्यवहारश्चेत्स्वतन्त्रोऽपि हि नर्णभाक्
स्वातन्त्र्यं हि स्मृतं ज्यैष्ठे ज्यैष्ठं गुणवयः कृतम् ३१
त्रयः स्वतन्त्रा लोकेऽस्मिन् राजाचार्यंस्तथैव च
प्रतिवर्णं च सर्वेषां वर्णानां स्वे गृहे गृही ३२
अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः
अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ३३
अस्वतन्त्राः स्त्रियः पुत्रा दासादिश्च परिग्रहः
स्वतन्त्रस्तत्र तु गृही यस्य यत्स्यात्क्रमागतम् ३४
गर्भस्थसदृशो ज्ञेय अष्टमाद्वत्सराच्छिशुः
बाल आषोडशाद्वर्षात्पोगण्ड इति शस्यते ३५
परतो व्यवहारज्ञः स्वतन्त्रः पितरौ विना
जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः ३६
तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात्
अभावे बीजिनो माता तदभावे तु पूर्वजः ३७
स्वतन्त्राः सर्व एवैते परतन्त्रेषु सर्वदा
अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः ३८
यद्बालः कुरुते कार्यमस्वतन्त्रस्तथैव च
अकृतं तदिति प्राहुर्धर्मशास्त्रविदो जनाः ३९
स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः
अकृतं तदपि प्राहुरस्वातन्त्र्यस्य हेतुतः ४०
कामक्रोधाभिभूतार्तभयव्यसनपीडिताः
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ४१
कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत्
तत्कृतं तु कृतं प्राहुर्नास्वतन्त्रकृतं कृतम् ४२

धनमूलाः क्रियाः सर्वा यत्नस्तत्साधने मतः
रक्षणं वर्धनं भोग इति तस्य विधिः क्रमात् ४३
तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च
कृष्णं च तस्य विज्ञेयः प्रभेदः सप्तधा पृथक् ४४
श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम्
धनं सप्तविधं शुक्लमुद्योगस्तस्य तद्विधः ४५
कुसीदकृषिवाणिज्यशुक्लशिल्पानुवृत्तिभिः
कृतोपकारादाप्तं च शबलं समुदाहृतम् ४६
उत्क्रोचद्यूतदौत्यार्तिप्रतिरूपकसाहसैः
व्याजेनोपार्जितं यच्च कृष्णं हि तदुदाहृतम् ४७
तेन क्रयो विक्रयश्च दानं ग्रहणमेव च
विविधाश्च प्रवर्तन्ते क्रियाः सम्भोग एव च ४८
यथाविधेन द्रव्येण यत्किञ्चित्कुरुते नरः
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ४९
तत्पुनर्द्वादशविधं प्रतिवर्णाश्रयात्स्मृतम्
साधारणं स्यात्त्रिविधं शेषं नवविधं विदुः ५०
क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया
अविशेषेण वर्णानां सर्वेषां त्रिविधं शुभम् ५१
वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य शुभं त्रिधा
प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा ५२
त्रिविधं क्षत्रियस्यापि शुद्धं वैशेषिकं धनम्
कराद्युद्धोपलब्धं च दण्डाच्च व्यवहारतः ५३
वैशेषिकं धनं ज्ञेयं वैशस्यापि त्रिधा शुभम्
कृषिगोरक्षवाणिज्यैः शूद्रस्यैषामनुग्रहात् ५४
सर्वेषामेव वर्णानामेष धर्म्यो धनागमः
विपर्ययादधर्म्यः स्यान्न चेदापद्गरीयसी ५५
आपत्स्वनन्तरा वृत्तिर्ब्राह्मणस्य विधीयते
वैश्यवृत्तिस्ततश्चोक्ता न जघन्या कथञ्चन ५६

न कथञ्चन कुर्वीत ब्राह्मणः कर्म वार्षलम्
वृषलः कर्म न ब्राह्मं पतनीये हि ते तयोः ५७
उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ५८
आपदं ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्यर्जितैर्धनैः
उत्सृजेत्क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः ५९
तस्यामेव तु यो वृत्तौ ब्राह्मणो रमते सदा
काण्डपृष्ठश्च्युतो मार्गादपांक्तेयः प्रकीर्तितः ६०
वैश्यवृत्त्या चाविक्रेयं ब्राह्मणस्य पयो दधि
घृतं मधु मधूच्छिष्टं लाक्षाक्षाररसासवाः ६१
मांसौदनतिलक्षौमसोमपुष्पफलोपलाः
मनुष्यविषशस्त्राम्बुलवणापूपवीरुधः ६२
चेलकौशेयचर्मास्थिकुतपैकशफा मृदः
उदश्वित्केशपिण्याकशाकार्द्रौषधयस्तथा ६३
ब्राह्मणस्य तु विक्रेयं शुष्कं दारु तृणानि च
गन्धद्रव्यैरकावेत्रतूलमूलकुशादृते ६४
स्वयं शीर्णं च विदलं फलानां वदिरेङ्गुदे
रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत् ६५
अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च
यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः ६६
अविक्रेयाणि विक्रीणन् ब्राह्मणः प्रच्युतः पथः
मार्गे पुनरवस्थाप्यो राज्ञा दण्डेन भूयसा ६७
प्रमाणानि प्रमाणस्थैः परिकल्प्यानि यत्नतः
सीदन्ति हि प्रमेयाणि प्रमाणैरव्यवस्थितैः ६८
लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्
थनस्वीकरणे येन धनी धनमवाप्नुयात् ६९
नाकरिष्यद्यदि स्रष्टा लिखितं चक्षुरुत्तमम्
तत्रेयमस्य लोकस्य नाभविष्यच्छुभा गतिः ७०

देशकालफलद्रव्यप्रमाणावधिनिश्चये
सर्वसन्देहविच्छेदिं लिखितं चक्षुरुत्तमम् ७१
गृहीत्वापि स्थले द्रव्यं योऽशह्नवितुमिच्छति
स्थापतिः साक्षिभिर्मार्गे स दुःसाध्योऽपि साध्यते ७२
लिखितं स्याद्बहुच्छिद्रं साक्षिणो नाजरामराः
भुक्तिस्त्वनर्थसंवद्धा संततैवार्थसाधकी ७३
तदेतत्त्रिविधं ज्ञेयं प्रमाणाय न साधितम्
सन्देहमागतमपि धनी धनमवाप्नुयात् ७४
लिखितं बलवन्नित्यं जीवितश्चैव साक्षिणः
कालातिहरणाद्भुक्तिरिति शास्त्रविनिश्चयः ७५
त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमम्
पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिस्तेभ्यो गरीयसी ७६
विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु
विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम् ७७
भुज्यमानान्परैरर्थान्यः स्वान्मौर्ख्यादुपेक्षते
समक्षं जीवतोऽप्यस्य तान्भुक्तिः कुरुते वशे ७८
यत्किञ्चिद्दश वर्षाणि सन्निधौ प्रेक्षते धनी
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ७९
अजडश्चेदपोगण्डो विषये चास्य भुज्यते
भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति ८०
आधिः सीमा बालधनं निक्षेपोपनिधी स्त्रियः
राजस्वं श्रोत्रियद्रव्यं न भोगेन प्रणश्यति ८१
प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः
आध्यादीन्यपि जीर्यन्ते स्त्रीनरेन्द्रधनादृते ८२
स्त्रीधनं च नरेन्द्राणां न कथञ्चन जीर्यते
अनागमं भुज्यमानं वत्सराणां शतैरपि ८३
सम्भोगो दृशते यत्र न दृश्येतागमः क्वचित्
आगमः कारणं तत्र न भोगस्तत्र कारणम् ८४

ग्रागमेन विशुद्धेन भोगो याति प्रमाणताम्
ग्रविशुद्धागमो भोगः प्रामाराय नैव गच्छति ८५
भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित्
भोगच्छलापदेशेन स विज्ञेयस्तु तस्करः ८६
ग्रनागमं तु यो भुंक्ते बहुन्यब्दशतान्यपि
चौरदराडेन तं पापं दराडयेत्पृथिवीपतिः ८७
भुज्यतेऽनागमं यत्तु न तद्भोगपदं नयेत्
प्रेते तु भोक्तरि धनं याति तद्वंशभोग्यताम् ८८
स्मार्ते काले क्रिया भुक्तेः सागमा भुक्तिरिष्यते
ग्रस्मार्ते लिखिताभावे क्रमात्त्रिपुरुषागता ८९
ग्राहतैर्वाभियुक्तः स्यान्नार्थानामुद्धरेत्पदम्
भुक्तिरेव विशुद्धिः स्यात्प्राप्ता या पितृतः क्रमात् ९०
ग्रन्यायेनापि यद्भुक्तं पितुः पूर्वतरैस्त्रिभिः
न तच्छक्यमपाहर्तं क्रमात्त्रिपुरुषागतम् ९१
ग्रन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचितम्
ग्रप्रत्यद्मं च यद्भुक्तं षडेतान्यागमं विना ९२
तथारूढविवादस्य प्रेतस्य व्यवहारिणः
पुत्रेण सोऽर्थः संशोध्यो न तं भोगपदं नयेत् ९३
सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साद्मिणः
ग्रन्यत्र श्राविताद्यस्मात्स्वयमासन्नमृत्युना ९४
न हि प्रत्यर्थिनि प्रेते प्रमाणं साद्मिणां वचः
साद्मिमत्कारणं तत्र प्रमाणं तस्य जीवतः ९५
श्रावितश्चातुरेणापि यस्त्वर्थो धर्मसंहितः
मृतेऽपि तत्र साद्म्यं स्यात्षट्सु चान्वाहितादिषु ९६
यदृणादिषु सर्वेषु बलवत्युत्तरा क्रिया
प्रतिग्रहाधिक्रीतेषु पूर्वा पूर्वा बलीयसी ९७
स्थानलाभनिमित्तं हि दानग्रहणमिष्यते
तत्कुसीदमिति प्रोक्तं तेन वृत्तिः कुसीदिनाम् ९८

वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम्
अशीतिभागं गृह्णीयाच्छते मासस्य वार्धुषी ९९
द्विकं त्रिकं चतुष्कं च पञ्चकं च समं स्मृतम्
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः १००
द्विकं शतं ता गृह्णीत सत्रां वृत्तमनुस्मरन्
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी १०१
कालिका कारिता चैव कायिका च तथापरा
चक्रवृद्धिश्च शास्त्रेऽस्मिन् वृद्धिर्दृष्टा चतुर्विधा १०२
प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका स्मृता
वृद्धिः सा कारिता नाम यर्णिकेन स्वयं कृता १०३
कायाविरोधिनी स्वस्वपणपादादिका क्रमात्
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता १०४
अर्थानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः
या देशावस्थितिस्त्वन्या यत्रर्णमवतिष्ठते १०५
द्विगुणं त्रिगुणं वापि तथान्यत्र चतुर्गुणम्
तथाष्टगुमन्यस्मिन्देयं देशेऽवतिष्ठते १०६
हिरण्यधान्यवस्त्राणां वृद्धिर्द्विस्त्रिश्चतुर्गुणा
रसस्याष्टगुणा वृद्धिः स्त्रीपशूनां च सन्ततिः १०७
न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्
अनाकारितमप्यूर्ध्वं वत्सरार्धात्प्रवर्धते १०८
प्रीतिदत्तं तु यत्किञ्चिन्न तद्वर्धत्ययाचितम्
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् १०९
एष वृद्धिविधिः प्रोक्तः प्रीतिदत्तस्य कर्मणः
वृद्धिस्तु योक्ता धान्यस्य वार्धुषं तदुदाहृतम् ११०
आपदं निस्तरेद्वैश्यः कामं वार्धुषिकर्मणा
आपत्स्वपि हि कष्टासु ब्राह्मणस्य न वार्धुषम् १११
ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः
निक्षिपेत्तत्स्वकुल्येषु तदभावेऽस्य बन्धुषु ११२

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः
तदा दद्याद्द्विजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत् ११३
गृहीत्वोपगतं दद्यादृर्णिकायोदयं धनी
अददद्याच्यमानस्तु शेषहानिमवाप्नुयात् ११४
यदि नो लेखयेद्दत्तमृणिना चोदितोऽपि सन्
ऋणिकस्यापि वर्धेत यथैव धनिकस्य तत् ११५
लेख्यं दद्याद्विशुद्धर्णे तदभावे प्रतिश्रयम्
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ११६
विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च
लिखितं साक्षिणश्च द्वे प्रमाणे व्यक्तिकारके ११७
उपस्थापनाय दानाय प्रत्ययाय तथैव च
त्रिविध प्रतिभूर्दृष्टस्त्रिष्वेवार्थेषु सूरिभिः ११८
ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वापि हापिते
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तथा ११९
बहवश्चेत्प्रतिभुवो दद्युस्तेऽर्थं यथाकृतम्
अर्थे विशेषिते ह्येष धनिनश्छन्दतः क्रिया १२०
यमर्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः
ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिदापयेत् १२१
धर्मेण व्यवहारेण छलेनाचरितेन च
प्रयुक्तं साधयेदर्थं पञ्चकेन बलेन च १२२
यः स्वकं साधयेदर्थमुत्तमर्णोऽधमर्णकात्
न स राज्ञा निषेधव्य ऐहिकामुष्मिकार्थतः १२३
अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा १२४
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च
उपचारस्तथैवास्य लाभहानिर्विपर्यये १२५
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते
विनष्टे मूलनाशः स्याद्दैवराजकृतादृते १२६

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् १२७
यः स्वामिनाभ्यनुज्ञातमाधि भुंक्तेऽविचक्षणः
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्क्रयः १२८
न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः १२९
रक्ष्यमाणोऽपि यत्राधिः कालेनेयादसारताम्
तत्राधिरन्यः कर्तव्यो देयं वा धनिने धनम् १३०
अत्र शक्तिविहीनः स्यादृणौ कालविपर्ययात्
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम् १३१
ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति
राज्ञा दापयितव्यः स्याद्गृहीत्वा पञ्चकं शतम् १३२
स्ववाक्सम्प्रतिपत्तौ तु ऋणिकं दशकं शतम्
विनयं दापयेद्राजा द्विगुणं तु पराजितम् १३३
न स्याद्द्रव्यपरीमाणं कालेनेहर्णिकस्य चेत्
जातिसंज्ञाधिवासानामागमो लेख्यतः स्मृतः १३४
लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः १३५
देशाचारविरुद्धं यद्व्यक्तावधिविलक्षणम्
तत्प्रमाणं स्मृतं लेख्यमविल्लुप्तक्रमाक्षरम् १३६
मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत्
तदप्रमाणं लिखितं भीतोपधिकृतं तथा १३७
मृताः स्युः साक्षिणो यत्र धनिकर्णिकलेखकाः
तदप्यपार्थं लिखितं न चेदाधिः स्थिराश्रयः १३८
आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा
सिद्धिरत्रोभयस्यास्य भोगो यत्रास्ति नान्यथा १३९
दर्शितं प्रतिकालं यत्प्रार्थितं श्रावितं तथा
लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिसु १४०

अदृष्टार्थमश्रुतार्थं व्यवहारार्थमागतम्
न लेख्यं सिद्धिमाप्नोति जीवत्स्वपि हि साक्षिषु १४१
लेख्ये देशान्तरन्यस्ते दग्धे दुर्लिखिते हृते
सतस्तत्कालहरणमसतो द्रष्टृदर्शनम् १४२
यत्र स्यात्संशयो लेख्ये भूताभूतकृते क्वचित्
तत्स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरुद्धरेत् १४३
लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत्
विप्रत्यये परीक्ष्यं तत्सम्बन्धागमहेतुभिः १४४
लिखितं लिखितेनैव साक्षिमत्साक्षिभिर्हरेत्
साक्षिभ्यो लिखितं श्रेयो लिखितान्न तु साक्षिणः १४५
छिन्नभिन्नहृतोन्मृष्टनष्टदुर्लिखितेषु च
कर्तव्यमन्यल्लेख्यं स्यादेष लेख्यविधिः स्मृतः १४६
सन्दिग्धेषु च कार्येषु द्वयोर्विवदमानयोः
श्रुतदृष्टानुभूतार्थात्साक्षिभ्यो व्यक्तिदर्शनम् १४७
समक्षदर्शनात्साक्षी विज्ञेयः श्रोत्रचक्षुषोः
श्रोत्रस्य यत्परो ब्रूते चक्षुषोर्दर्शनं स्वयम् १४८
एकादशविधः साक्षी शास्त्रदृष्टो मनीषिभिः
कृतः पञ्चविधस्तेषां षडविधोऽकृत उच्यते १४९
लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः १५०
षडेते पुनरुद्दिष्टाः साक्षिणस्त्वकृताः स्वयम्
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् १५१
कार्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितश्च यः
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः १५२
कुलीना ऋजवः शुद्धा जन्मतः कर्मतोऽर्थतः
त्र्यवराः साक्षिणोऽनिन्द्याः शुचयः शुद्धबुद्धयः १५३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाप्यनिन्दिताः
प्रतिवर्णं भवेयुस्ते सर्वे सर्वेषु वा स्मृताः १५४

श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः १५५
श्रेण्यादिषु च सर्वेषु कश्चिच्चेद्द्वेष्यतामियात्
तेभ्य एव न साक्ष्यं स्याद्द्वेष्टारः सर्व एव ते १५६
असाक्ष्यपि हि शास्त्रेऽस्मिन्दृष्टः पञ्चविधो बुधैः
वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः १५७
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः १५८
स्तेनाः साहसिकाश्चण्डाः कितवा वधकाश्च ये
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते १५९
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः १६०
अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत्
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति १६१
योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः १६२
द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः १६३
आधर्य्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः १६४
न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः
भेदयेत्तं न चान्येन हीयतैवं समाचरन् १६५
साक्ष्युद्दिष्टो यदि प्रेयाद्गच्छेद्वापि दिगन्तरम्
तच्छ्रोतारः प्रमाणं स्युः प्रमाणं ह्युत्तरा क्रिया १६६
सुदीर्घेणापि कालेन लिखितः सिद्धिमाप्नुयात्
आत्मनैव लिखेज्जानन्नचेदन्येन लेखयेत् १६७
आष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः
आ पञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य च १६८

आ तृतीयात्तथा वर्षात्सिद्धिर्गुढस्य साक्षिणः
आ सम्वत्सरतः सिद्धिर्वदन्त्युत्तरसाक्षिणः १६९
अथवा कालनियमो न दृष्टः साक्षिणं प्रति
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः १७०
यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रं च साक्षिणः
सुदीर्घेणापि कालेन स साक्षी साक्ष्यमर्हति १७१
असाक्षिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्तिताः
लक्षणान्येव साक्षित्वे येषामाहुर्मनीषिणः १७२
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिस्तु घातकः
केशाकेशिगृहीतश्च युगपत्पारदारिकः १७३
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः
तथा कुठारपाणिश्च वनच्छेत्ता प्रकीर्तितः १७४
प्रत्यक्षचिह्नो विज्ञेयो दण्डपारुष्यकृन्नरः
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् १७५
कश्चित्कृत्वात्मनश्चिह्नं द्वेषात्परमुपद्रवेत्
हेत्वर्थगतिसामर्थ्यैस्तत्र युक्तं परीक्षणम् १७६
नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः
न दृष्टदोषाः प्रष्टव्याः साक्षिणः प्रतिदूषिताः १७७
दासनैकृतिकाश्राद्धवृद्धस्त्रीबालचाक्रिकाः
मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः १७८
महापथिकसामुद्रवणिक्प्रव्रजितातुराः
व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः १७९
नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः
एकस्थालीसहायारिचरज्ञातिसनाभयः १८०
प्राग्दृष्टदोषशैलूषविषजीव्यहितुण्डिकाः
गरदाग्निदकीनाशशूद्रापुत्रौपपातिकाः १८१
क्लान्तसाहसिकश्रान्तनिर्धनान्त्यावसायिनः
भिन्नवृत्तासमावृत्तजडतैलिकमूलिकाः १८२

भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः १८३
कुनखी श्यामदन्तश्च मित्रध्रुक्शठशौण्डिकाः
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः १८४
वधकश्चर्नकृत्पङ्गुः पतितः कुटकारकः
कुहकः प्रत्यवसितस्तस्करो राजपुरुषः १८५
मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम्
विक्रेता ब्रह्मणश्चैव द्विजो वार्धुषिकश्च यः १८६
च्युतः स्वधर्मात्कुलिकः स्तावको हीनसेवकः
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः १८७
असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः १८८
साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च
पारुष्ययोश्चाप्युभयोर्न परीक्षेत साक्षिणः १८९
तेषामपि न बालः स्यान्न स्त्री नैको न कूटकृत्
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा १९०
बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत्
विब्रुयाद्बान्धवः स्नेहाद्वैरनिर्यातनादरिः १९१
उभयानुमतो यः स्याद्द्वयोर्विवदमानयोः
असाक्षिकोऽपि साक्षित्वे प्रष्टव्यः स्यात्स संसदि १९२
यस्त्वात्मदोषभिन्नत्वादस्वस्थ इव लक्ष्यते
स्थानात्स्थानान्तरं गच्छेदेकैकं चानुधावति १९३
क्रामत्यनिभृतोऽकस्मादभीक्ष्णं निश्वसत्यपि
भूमिं लिखति पादाभ्यां बाहु वासो धुनोति च १९४
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा
शोषमागच्छतश्चोष्ठावूर्द्ध्वं तिर्थक् च वीक्षते १९५
त्वरमाण इवाकस्मादस्पृष्टो बहु भाषते
कूटसाक्षी च स विज्ञेयस्तं पापं विनयेन्नृपः १९६

श्रावयित्वा तथान्येभ्यः साक्षित्वं यो विनिह्नुते
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः १९७
आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम्
समस्तान्विदिताचारान्विज्ञातार्थान्पृथक्पृथक् १९८
सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः १९९
पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः
अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् २००
नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः
अन्धः शत्रुगृहं गच्छेत् यः साक्ष्यमनृतं वदेत् २०१
नग्नो मुण्डः कपालेन परद्वारे बुभुक्षितः
अमित्रान्भूयशः पश्येद्यः साक्ष्यमनृतं वदेत् २०२
यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः
यां च भाराभितप्ताङ्गी दुर्विवक्ता स तां वसेत् २०३
साक्षी साक्ष्ये समुद्दिशन् गोकर्णशिथिलं वचः
सहस्रं वारुणान्पाशान् भुंक्ते स बन्धनाद्ध्रुवम् २०४
तस्य वर्षशते पूर्णे पाश एव प्रमुच्यते
तदा पाशाद्विनिर्मुक्तः स्त्री सम्भवति मानवः २०५
एवं सम्बन्धनात्तस्मान्मुच्यते नियताच्च सः
पशुगोऽश्वपुरुषाणां हिरण्यं भूर्यथाक्रमम् २०६
यावतो बान्धवांस्तस्मिन् हन्ति साक्ष्येऽनृतं वदन्
तावतः सम्प्रवक्ष्यामि शृणु सौम्यानुपूर्वशः २०७
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते
शतमश्वानृते हन्ति सहस्रं पुरुषानृते २०८
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः २०९
एकमेवाद्वितीयं तत्प्राहुः पावनमात्मनः
सत्यं सर्गस्य सोपानं पारावारस्य नौरिव २१०

अश्वमेधसहस्रं च सत्यं च तुलया धृतम्
अश्वमेधसहस्रात्तु सत्यमेव विशिष्यते २११
वरं कूपशताद्वापी वरं वापीशतात्क्रतुः
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् २१२
भूर्धारयति सत्येन सत्येनोदेति भास्करः
सत्येन वायुः प्लवते सत्येनापः स्रवन्ति च २१३
सत्यमेव परं दानं सत्यमेव परं तपः
सत्यमेव परो धर्मो लोकानामिति नः श्रुतम् २१४
सत्यं देवाः समासेन मनुष्यास्त्वनृतं स्मृतम्
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः २१५
सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि
उक्त्वानृतं महाघोरं नरकं प्रतिपत्स्यसे २१६
नरकेषु च ते शश्वज्जिह्वामुत्कृत्य दारुणाः
असिभिः शातयिष्यन्ति बलिनो यमकिङ्कराः २१७
शूलैर्भेत्स्यन्ति चाक्रम्य क्रोशन्तमपरायणम्
अवस्थितं समुत्कृत्य क्षेप्स्यन्ति त्वां हुताशने २१८
अनुभूय च तास्तीव्राश्चिरं नरकेवेदनाः
इह यास्यसि पापासु गृध्रकाकादियोनिषु २१९
ज्ञात्वैताननृते दोषान् ज्ञात्वा सत्ये च सद्गुणान्
सत्यं वदोद्धरात्मानं नात्मानं पातय स्वयम् २२०
न बान्धवा न सुहृदो न धनानि महान्त्यपि
अलं धारयितुं शक्तास्तमस्युग्रे निमज्जतः २२१
पितरस्त्ववलम्बन्ते त्वयि साक्षित्वमागते
तारयिष्यति किं त्वस्मान् किं चायं पातयिष्यति २२२
सत्यमात्मा मनुष्यस्य सत्ये सर्वं प्रतिष्ठितम्
सत्यमुक्त्वात्मनात्मानं श्रेयसा संनियोजय २२३
यस्यां रात्रावजनिष्ठा यस्यां रात्रौ मरिष्यसि
वृथा तदनन्तरं तुभ्यं साक्ष्यं चेदन्यथा कृथाः २२४

ब्रह्मघ्नस्य तु ये लोका ये च स्त्रीबालघातिनाम्
ये च लोकाः कृतघ्नस्य ते ते स्युर्ब्रुवतो वृथा २२५
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्
साक्षिधर्मे विशेषेण सत्यमेव वदेत्ततः २२६
पुराणोक्तौ द्वौ श्लोकौ भवतः
यः परार्थे प्रहिणुयात् स्वां वाचं पुरुषाधमः
आत्मार्थे किं न कुर्यात् स पापो नरकनिर्भयः २२७
वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिश्रिताः
यो हि तांस्तेनयेद्वाचं स सर्वस्तेयकृन्नरः २२८
साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो यतः
तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये स्मृतिमत्तराः २२९
स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते
सूक्ष्मत्वात्साक्षिधर्मस्य साक्ष्यं व्यावर्तते ततः २३०
स्वसाक्षिवर्जितो यस्तु दैवाद्वादी कथं चन
उद्धारं तस्य नेच्छन्ति दिव्येनापि मनीषिणः २३१
निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्य आगते
न ब्रुयादक्षरसमं न तन्निगदितं भवेत् २३२
देशकालवयोद्रव्यप्रमाणाकृतिजातिषु
यत्र विप्रतिपत्तिः स्यात्साक्ष्यं तदपि चान्यथा २३३
ऊनं वाप्यधिकं वार्थं प्रब्रुयुर्यत्र साक्षिणः
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः २३४
प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः
अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः २३५
चोदना प्रतिकालं च युक्तिलेशस्तथैव च
तृतीयः शपथः प्रोक्तस्तैरेनं साधयेत्क्रमात् २३६
अभीक्ष्णं चोद्यमानो यः प्रतिहन्यान्न तद्वचः
त्रिश्चतुः पञ्चकृत्वो वा परतोऽर्थं स दापयेत् २३७
चोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात्

देशकालार्थसम्बन्धपरिमाणक्रियादिभिः २३८
युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत्
देशकालबलापेक्षमग्न्यम्बुसुकृतादिभिः २३९
यमन्तर्धारयन्त्यापो दीप्तोऽग्निर्न दहत्येव
शाययत्यभिशापं तं किल्विषी स्यादतोऽन्यथा २४०
अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे
न्यासस्यापह्नवे चैव दिव्या सम्भवति क्रिया २४१
स्त्रीणां शीलाभियोगेषु स्तेयसाहसयोरपि
एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु च २४२
शपथा ह्यपि देवानामृषीणामपि च स्मृताः
वसिष्ठः शपथं शेपे यातुधानेन शङ्कितः २४२
सप्तर्षयस्तथेन्द्रेण पुष्करार्थेन शङ्किताः
शेपुः शपथमव्यग्राः परस्परविशुद्धये २४४
अयुक्तं साहसं कृत्वा प्रत्यापत्तिं भजते यः
ब्रूयात्स्वयं वा सदिति तस्यार्धविनयः स्मृतः २४५
गूहमानस्तु वैचित्र्याद्यदि पापः स जीयते
सभ्यास्तस्य न तुष्यन्ति तीव्रो दण्डश्च पात्यते २४६
यदा साक्षी न विद्येत विवादे वदतां नृणाम्
तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः २४७
सत्यं वाहनशास्त्राणि गोबीजकनकादि च
देवतापितृपादाश्च दत्तानि सुकृतानि च २४८
महापराधे दिव्यानि दापयेत्तु महीपतिः
अल्पेषु तु नृपश्रेष्ठ शपथैः श्रावयेन्नरम् २४९
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे
पातकेष्टाभियोगे च विधिर्दिव्यः प्रकीर्तितः २५०
सन्दिग्धेऽर्थेऽभियुक्तानां प्रच्छन्नेषु विशेषतः
दैवं पञ्चविधं ज्ञेयमित्याह भगवान्मनुः २५१
धटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः

उक्तान्येतानि दिव्यानि विशुद्धर्थं महात्मनाम् २५२
सन्दिग्धेऽर्थेऽभियुक्तानां विशुद्ध्यर्थं दुरात्मनाम्
प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये २५३
वर्षासु वह्निरित्युक्तः शिशिरे तु धटः स्मृतः
ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले २५४
नार्तानां तोयशुद्धिः स्यान्न विषं पित्तसेगिणाम्
श्वित्र्यन्धकुनखीनां च नाग्निशुद्धिर्विधीयते २५५
सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम्
स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते २५६
शिरोवर्ती यदा न स्यात्तदा दिव्यं न दीयते
कारणैः सहितं प्रोक्तं न दिव्यं चार्थिनामृणाम् २५७
तत्प्राज्ञेन विनीतेन धार्मिकेन विजानता
उभयानुमते देयं दिव्यं सर्वं प्रयत्नतः २५८
न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम्
न प्रावृषि विषं दद्यात्प्रवाते न तुलां नृणाम् २५९
विचार्य धर्मनिपुणैः सर्वधर्मविशारदैः
इदं सर्वर्तुकं प्रोक्तं पण्डितैर्धटधारणम् २६०
हस्तद्वयं तु निखेयमुक्तं मुण्डकयोः सदा
षड्ढस्तं तु तयोर्दृष्टं प्रमाणं परिणाहतः २६१
चतुर्हस्ता धटतुला पादौचापि प्रकीर्तितौ
पादयोरन्तरं हस्तो भवेदध्यर्धमेव च २६२
ऋज्वी धटतुला कार्या खादिरी तैन्दुकापि वा
चतुरस्रा त्रिभिः स्थानैर्धटकर्कटकादिभिः २६३
खादिरं कारयेत्तं च निर्व्रणं शुष्कवर्जितम्
शांशपं तदभावे तु शालं वा कोटरैर्विना २६४
एवं विधानि काष्ठानि धटार्थे परिकल्पयेत्
सभाराजकुलद्वारे सुरायतनचत्वरे २६५
निखेयो निश्चलः कार्यो गन्धमाल्यानुलेपनः

दध्यक्षतहविर्गन्धकृतपावनमङ्गलः २६६
रक्षार्थमाहूतैर्लोके लोकपालैरधिष्ठितः
सर्वदा स तु देयः स्यात्सर्वलोकस्य पश्यतः २६७
अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम् २६८
शिरोपस्थायिनि नरे अभियोक्तर्युपस्थिते
दिव्यप्रदानं विहितमन्यत्र नृपहिंसनात् २६९
अशिरांस्यपि दिव्यानि राजा भृत्येषु दापयेत्
अभियोगाभियुक्तानामन्येषां तु यथाक्रमम् २७०
शिक्यद्वयं समासज्य धटकर्कटयोर्दृढम्
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् २७१
धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम्
पिटिकां पूरयेत्तस्मिन्निष्टकालोष्टपांशुभिः २७२
प्रभमारोपणे ग्राह्यं प्रमाणं निपुणैः सह
तुलाशिलाभ्यां तुल्यं च तोरणं न्यस्तलक्षणम् २७३
सुवर्णकारा वणिजः कुशलाः कांस्यकारकाः
अवेक्षेरन्धटतुलां तुलाधारणकोविदाः २७४
तुलयित्वा नरं पूर्वं चिह्नं कृत्वा धटस्य च
वक्षास्थाने यदा तुल्यमवतार्य ततो धटात् २७५
समयैः परिगृह्याथ पुणरारोपयेन्नरम्
निर्वाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् २७६
तस्मिन्नेव समारूढे धृत्वा कक्षां द्विजो वदेत्
धर्मपर्यायवचनैर्धट इत्यभिधीयसे २७७
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च
व्यवहाराभिशस्तोऽयं मानवस्तुल्यते त्वया २७८
देवासुरमनुष्याणां सत्ये त्वमतिरिच्यसे
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता २७९
तत्सत्यं वद कल्याणि संशयान्मां विमोचय

यद्यहं पापकर्मास्मि तदा त्वं मामधो नय २८०
शुद्धं चैव विजानासि तत ऊर्ध्वं गृहाण माम्
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि २८१
इत्यादि कृतश्रावणं लोकपालैः सुरैश्च वै
पुरुषं पुनरारूढं समुद्धृत्य निरीक्षयेत् २८२
तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः
समो वा हीयमानो वा अविशुद्धो भवेन्नरः २८३
कक्षाछेदे तुलाभङ्गे धटकर्कटयोस्तथा
रज्जुच्छेदेऽक्षभङ्गे च मूर्तितः शुद्धिमादिशेत् २८४
अतः परं प्रवक्ष्यामि विधिमग्नेस्तथोत्तमम्
द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् २८५
अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम्
षट्पञ्चाशद्समधिकं भूमेस्तु परिकल्पना २८६
सप्ताश्वत्थस्य पत्राणि अभियुक्तस्य हस्तयोः
कृत्वा न्यस्येत्तु पत्राणि सप्तभिः सूत्रतन्तुभिः २८७
जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि
दृष्टयोगश्चान्यत्रापि तेनायोऽग्नौ प्रतापयेत् २८८
अग्निवर्णमयः पिण्डं सस्फुलिङ्गं सुरक्तिकम्
पञ्चाशत्पलिकं भूयः कृत्वैवं तं शुचिर्द्विजः २८९
तृतीयतापतप्तं तं ब्रूयात्सत्यपुरस्कृतः
श्रूयतां मानवो धर्मो लोकपालैरधिष्ठितः २९०
त्वमग्ने सर्वदेवानां पवित्रं परमं मुखम्
त्वमेतत्सर्वभूतानां हृदिस्थो वेत्सि चेष्टितम् २९१
सत्यानृते च जिह्वायास्त्वत्तः समुपजायते
वेदादिभिरिदं प्रोक्तं नान्यथा कर्तुमर्हसि २९२
अनेनायमिदं प्रोक्तो मिथ्या चेदमथाब्रवीत्
सर्वथा च यथा मिथ्या तथाग्निं धारयाम्यहम् २९३
एष धारयते च त्वां सत्येनानेन मानवः

तदस्य सत्यवाक्यस्य शीती भव हुताशन
मृषावाक्यस्य पापस्य दह हस्तौ तु शापितः २९४
अमुमर्थं च पत्रस्थमभिलिख्य यथार्थतः
श्रावितस्यैव तन्मूर्ध्नि तस्य देयं यथाक्रमम् २९५
स्नातश्च मण्डलस्थश्च ततः संगृह्य पापकम्
स्थित्वैकस्मिन्ततोऽन्यानि व्रजेत् सप्त शनैः शनैः २९६
पातयेन्न तमप्राप्य या भूमिः परिकल्पिता
अष्टमं मण्डलं गत्वा ततोऽग्निं विसृजेन्नरः २९७
यस्तु पातयते त्रासाद्दग्धो वा न विभाव्यते
पुनस्तं धारयेदग्निं स्थितिरेव दृढीकृता २९८
मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसम्मितम्
न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम् २९९
अनेन विधिना कार्यो हुताशः समयः सदा
ऋते ग्रीष्मात्सदा युक्तः कालेऽन्यत्र सुशीतले ३००
हस्तक्षतेषु सर्वेषु कुर्यात् काकपदानि च
तान्येव पुनरवेक्षेद्धस्तौ बिन्दुविचित्रितौ ३०१
यत्पुनर्न विभाव्येते दग्धावेतौ करौ तदा
व्रीहीन् प्रगृह्य यत्नेन सप्त वारांस्तु मर्दयेत् ३०२
मर्दितैर्यदि नो दग्धः सभ्यैरेवं विनिश्चितः
मोच्यः स शुद्धः सत्कृत्य दग्धो दण्ड्यो यथाक्रमम् ३०३
अतः परं प्रवक्ष्यामि पानीयविधिमुत्तमम्
हैमन्तकालादन्यत्र शिशिराच्च यथाक्रमम् ३०४
नदीषु नातिवेगासु सागरेषु वहेषु च
ह्रदेषु देवखातेषु तडागेषु सरःसु च ३०५
नातिक्रूरेण धनुषा प्रेषयित्वा शरत्रयम्
पानीयमज्जनं कार्यं कियत्तच्च विपश्चितः ३०६
क्रूरं धनुः शप्तशतं मध्यमं षट्शतं स्मृतम्
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ३०७

नाभिमात्रे जले स्थाप्यः पुरुषः स्तम्भवद्बली
तस्योरू संप्रगृह्याथ निमज्जेदभिशस्तवान् ३०८
शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः
गच्छेत्परमया शक्त्या यत्र स्यान्मध्यमः शरः ३०९
मध्यमं तु शरं गृह्य पुरुषोऽन्यस्तथाविधः
प्रत्यागच्छेत वेगेन यतः स पुरुषो गतः ३१०
आगतश्च शरग्राही न पश्यति यदा जले
अन्तर्जलं यदा सम्यक्तदा शुद्धिं विनिर्दिशेत् ३११
अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात्
स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्वं निवेशितः ३१२
न मज्जनीयं स्त्रीबालं धर्मशास्त्रविशारदैः
रोगिणश्चापि वृद्धाश्च पुमांसो ये च दुर्बलाः ३१३
निरुत्साहान्रुजाक्लिष्टानार्तांश्च न निमज्जयेत्
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्रमाणा हि ते स्मृताः ३१४
साहसेनागतानेतान्नैव तोये निमज्जयेत्
न चापि साधयेदग्निं न विषेण विशोधयेत् ३१५
सत्यानृतविभागस्य तोयाग्नी स्पष्टकृत्तमौ
अद्भ्राश्चाग्निरभूद्यस्मात्तस्मात्तोये विशेषतः ३१६
क्रियते धर्मतत्त्वज्ञैर्दुषितानां विशोधनम्
तस्मात्सत्येन भगवञ्जलेश त्रातुमर्हसि ३१७
अतः परं प्रवक्ष्यामि विषस्य विधिमुत्तमम्
यस्मिन्काले यथा प्रोक्तं यादृशं परिकीर्तितम् ३१८
यावन्मात्रं समुद्दिष्टं धर्मतत्त्वार्थदर्शिभिः
तुलयित्वा शरत्काले देयमेतद्धिमागमे ३१९
नापराह्णे न सन्ध्यायां न मध्याह्ने तु धर्मवित्
शरद्ग्रीष्मवसन्तेषु वर्षासु व विवर्जयेत् ३२०
भग्नं च चारितं चैव धूपितं मिश्रितं तथा
कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ३२१

शार्ङ्गं हैमवतं शस्तं वर्णगन्धरसान्वितम्
अभिन्नं तत्प्रदातव्यं क्षत्रविट्शूद्रयोनिषु ३२२
विषस्य पलषड्भागाद्भागी विंशतिमस्तु यः
तमष्टभागहीनं तु शोध्ये दद्याद्घृतप्लुतम् ३२३
वर्षासु षड्यवा मात्रा ग्रीष्मे पञ्च यवाः स्मृताः
हेमन्ते सप्त वाष्टौ वा शरद्यस्यापि नेष्यते ३२४
त्वं विषं ब्रह्मणः पुत्रः सत्यधर्मव्यवस्थितः
शोधयैनं नरं पापात्सत्येनास्यामृती भव ३२५
छायानिवेशितो रक्ष्यो दिनशेषमभोजनः
विषवेगक्लमातीत शुद्धोऽसौ मनुरब्रवीत् ३२६
अतः परं प्रवक्ष्यामि कोशस्य विधिमुत्तमम्
शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधि यत् ३२७
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च
सशूकस्याव्यसनिनः कोशपानं विधीयते ३२८
यद्भक्तः सोऽभियुक्तः स्यात्तद्दैवत्यं तु पाययेत्
अभ्यर्च्य देवतां स्नाप्य जलस्य प्रसृतित्रयम् ३२९
सप्ताहाभ्यन्तरे यस्य द्विसप्ताहेन वाशुभम्
प्रत्यात्मकं तु दृश्येत सैव तस्य विभावना ३३०
ऊर्ध्वं यस्य द्विसप्ताहान्महदप्यशुभं भवेत्
नाभियोज्यः स केनापि कृतकालव्यतिक्रमात् ३३१
मद्यापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते
नास्तिकव्रात्यदासेषु कोशपानं विवर्जयेत् ३३२
यथोक्तेन विधानेन पञ्च दिव्यानि धर्मवित्
दत्त्वा राजाभिशस्तानां प्रेत्य चेह च नन्दति ३३३
ग्रीष्मे तु सलिलं प्रोक्तं विषं काले सुशीतले
ब्राह्मणस्य धटो देयः क्षत्रियस्याग्निरुच्यते ३३४
वैश्ये तु सलिलं देयं विषं शूद्रे प्रदापयेत्
न ब्राह्मणे विषं दद्यान्न लोहं क्षत्रियो हरेत् ३३५

कोशान्तानि तुलादीनि गुरुष्वर्थेषु दापयेत्
शतार्धं दापयेच्छुद्धावशुद्धो दराडभाग्भवेत्  ३३६
तराडुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम्
चौर्ये तु तराडुला देया नान्यत्रेति विनिश्चयः  ३३७
तराडुलान् कारयेच्छुक्लाञ्छालेर्नान्यस्य कस्यचित्
मृन्मये भाजने कृत्वा भास्करस्याग्रतः शुचिः  ३३८
स्नानोदकेन संपृक्तान् रात्रौ तत्रैव वासयेत्
प्रभातायां रजन्यां तु त्रिः कृत्वा प्रांमुखाय च  ३३९
स्नाताय सोपवासाय दद्याद्देवार्चकः स्वयम्
स्वयं कार्यं समुद्दिश्य सत्यासत्यपरीक्षणे  ३४०
तराडुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः
अश्वत्थपत्राभावे तु भूर्जपत्रे ततः स्मृतम्  ३४१
दृश्यते शोणितं यस्य दन्तजालं च सीदति
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत्  ३४२
अतः परं प्रवक्ष्यामि तप्तमाषकलक्षणम्
शुभाशुभपरीक्षार्थं ब्रह्मणाभिहितं स्वयम्  ३४३
सौवर्णे राजते पात्रे आयसे मृन्मयेऽपि वा
क्षिप्रं घृतमुपादाय तदग्नौ स्थापयेच्छुचिः  ३४४
सौवर्णीं राजसीं ताम्रीमायसीं वा सुशोभिताम्
सलिलेनासकृद्धौतां निक्षिपेत्तत्र मुद्रिकाम्  ३४५
भ्रमत्पतितायामन्तः स नः स्पर्शसुभीषणः
ततस्त्वनेन मन्त्रेण घृतं तदभिमन्त्रयेत्  ३४६
परं पवित्रममृतं घृतं त्वं यज्ञकर्मसु
दहाग्ने यद्ययं पापो हिमशीतं शुचौ भव  ३४७
प्रदेशिन्यक्षता यस्य संस्पृष्टायां परीक्षणे
यदि विस्फोटका न स्युः शुद्धोऽसावन्यथा न हि  ३४८
इति ऋणादानं नाम प्रथमं व्यवहारपदं समाप्तम्

## निक्षेपः

स्वं द्रव्यं यत्र विश्रम्भान्निक्षिपत्यविशङ्कितः
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः १
कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः २
यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ३
न चेद्दद्यात्तु निक्षेप्तुस्तद्द्रव्यं तु यथाविधि
उपसंगृह्य दाप्योऽसौ दिव्यादिभिर्व्यवस्थितः ४
अन्यद्रव्यव्यवहितं द्रव्यमव्याहृतं च यत्
निक्षिप्यते परगृहे तदौपनिधिकं स्मृतम् ५
स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ६
याच्यमानस्तु यो दात्रा निक्षेपं न प्रयच्छति
दण्ड्यः स राज्ञा दुष्टात्मा नष्टे दाप्यश्च तत्समम् ७
यं चार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया
तत्रापि दण्ड्यः स भवेद्दाप्यस्तच्चापि सोदयम् ८
ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः
दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितम् ९
स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे
म स राज्ञाभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः १०
अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम्
विचार्य तस्य वा वृत्तं साम्नैव परिशोधयेत् ११
चोरैर्हृतं जले मग्नमग्निना दग्धमेव च
न दद्याद्यदि तस्मात्स न संहरति किंचन १२
यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते
तावुभौ चौरवच्छास्यौ दण्डं दाप्यौ च तत्समम् १३
एष एव विधिर्दृष्टो याचितान्वाहितादिषु

शिल्पे चोपनिधौ न्यासे प्रतिन्यासे तथैव च  १४
प्रतिगृह्णाति पोगण्डं यश्च सप्रधनं नरः
तस्याप्येष भवेद्धर्मः षडेते विधयः समाः  १५
इति उपनिधिर्नाम द्वितीयं व्यवहारपदं समाप्तम्

## सम्भूयसमुत्थानम्

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते
तत्सम्भूयसमुत्थानं व्यवहारपदं स्मृतम्  १
फलहेतोरुपायेन कर्म सम्भूय कुर्वताम्
आधारभूतः प्रक्षेपस्तेनोत्तिष्ठेयुरंशतः  २
समोऽतिरिक्तो हीनो वा तत्रांशो यस्य यादृशः
क्षयव्ययौ तथा वृद्धिस्तत्र तस्य तथाविधाः  ३
भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम्
कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः  ४
प्रमादान्नाशितं दाप्यः प्रतिषिद्धकृतं च यत्
असंदिष्टश्च यत्कुर्यात्सर्वसम्भूयकारिभिः  ५
दैवतस्कारराजभ्यो व्यसने समुपस्थिते
यस्तत्स्वशक्त्या रक्षेत तस्यांशो दशमः स्मृतः  ६
एकस्य चेत्स्याद्व्यसनं दायादोऽस्य तदाप्नुयात्
अन्यो वासति दायादे शक्ताश्चेत् सर्व एव वा  ७
ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म निस्तरेत्
लभेत दक्षिणाभागं स तस्मात्संप्रकल्पितम्  ८
ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम्
अदुष्टं वर्त्विजं याज्यो विनेयौ तावुभावपि  ९
ऋत्विक्तु त्रिविधो दृष्टः पूर्वजुष्टः स्वयं कृतः
यदृच्छया च यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम्  १०
क्रमागतेष्वेष धर्मो वृतेष्वृत्विक्सु च स्वयम्
यादृच्छिकेषु याज्यस्य तत्त्यागे नास्ति किल्बिषम्  ११

शुल्कस्थानं वणिक्प्राप्तः शुल्कं दद्याद्यथोदितम्
न तद्व्यतिहरेद्राज्ञो बलिरेष प्रकीर्तितः १२
शुक्लस्थानं परिहरन्नकाले क्रयविक्रयी
मिथ्योक्त्वा च परिमाणं दाप्योऽष्टगुणमत्ययम् १३
सदा श्रोत्रियवर्ज्याणि शुल्कान्याहुः प्रजानता
गृहोपयोगि यच्चैषां न तु वाणिज्यकर्मणि १४
प्रतिग्रहो द्विजातीनां धनं रङ्गोपजीविनाम्
स्कन्धवाह्यं च यद्द्रव्यं न तद्युक्तं प्रदापयेत् १५
कश्चिच्चेत्सञ्चरन्देशान्प्रेयादभ्यागतो वणिक्
राजास्य भाण्डं रक्षेत् यावद्दायाददर्शनम् १६
दायादेऽसति बन्धुभ्यो ज्ञातिभ्यो वा समर्पयेत्
तदभावे सुगुप्तं तद्धारयेद्दशतीः समाः १७
अस्वामिकमदायादं दशवर्षस्थितं ततः
राजा तदात्मसात्कुर्यादेवं धर्मो न ईयते १८
इति सम्भूयसमुत्थानं नाम तृतीयं व्यवहारपदं समाप्तम्

## दत्ताप्रदानिकम्

दत्त्वा द्रव्यमसम्यग् यः पुनरादातुमिच्छति
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् १
अदेयमथ देयं च दत्तं चादत्तमेव च
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः २
तत्रेहाष्टावदेयानि देयमेकविधं स्मृतम्
दत्तं सप्तविधं ज्ञेयमदत्तं षोडशात्मकम् ३
अन्वाहितं याचितकमाधिः साधारणं च यत्
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ४
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना
अदेयान्याहुराचार्या यच्चामस्मै प्रतिश्रुतम् ५
कुटुम्बभरणात् द्रव्यं यत्किञ्चिदतिरिच्यते

तद्देयमपहृत्यान्यत् कुटुम्बी दोषमाप्नुयात्  ६
यस्य त्रैवार्षिकं वित्तं पर्याप्तं भृत्यवृत्तये
अधिकं वापि विद्येत स सोमं पातुमर्हति  ७
पण्यमूल्यं भूतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः
स्त्रीभक्त्यनुग्रहार्थं च दत्तं सप्तविधं स्मृतम्  ८
अदत्तं तु भयक्रोधद्वेषशोकरुगन्वितैः
तथोत्कोचपरिहासव्यत्यासच्छलयोगतः  ९
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम्
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत्  १०
अपात्रे पात्रमित्युक्ते कार्ये वा धर्मसंहिते
यद्दत्तं स्यादविज्ञानाददत्तं तदपि स्मृतम्  ११
गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति
अदेयदायको दण्ड्यस्तथादत्तप्रतीच्छकः  १२
इति दत्ताप्रदानिकं नाम चतुर्थं व्यवहारपदं समाप्तम्

## अभ्युपेत्याशुश्रूषा

अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते  १
शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः
चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः  २
शिष्यान्तेवासिमृतकाश्चतुर्थस्त्वधिकर्मकृत्
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः  ३
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः
जातिकर्मकृतश्चोक्तो विशेषो वृत्तिरेव च  ४
कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च
अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्  ५
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्
गुह्याङ्गस्पर्शनोच्छिष्टविन्मूत्रग्रहणोज्झनम्  ६

इष्टतः स्वामिनश्चाङ्गैरुपस्थानमथोऽन्ततः
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ७
आ विद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम्
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ८
ब्रह्मचारी चरेद्भैक्षमधःशाय्यनलङ्कृतः
जघन्यशायी सर्वेषां पूर्वोत्थायी गुरोर्गृहे ९
नासंदिष्टः प्रतिष्ठेत तिष्ठेद्वा गुरुणा क्वचित्
संदिष्टः प्रतिकुर्वीत शक्तश्चेदविचारयन् १०
यथाकालमधीयीत यावन्न विमना गुरु
आसीनोऽधोऽगुरोः पार्श्वे फलके वा समाहितः ११
स्रोतोवहेव सर्वत्र विद्या निम्नानुसारिणी
निम्नवर्ती भवेत्तस्मात्तदर्थी सर्वदा गुरोः १२
अनुशास्यश्च गुरुणा न चेदनुविधीयते
अविधिनाथवा बध्वा रज्ज्वा वेणुदलेन वा १३
भृशं न ताडयेदेनं नोत्तमाङ्गे न वक्षसि
अनुशास्याथ विश्वास्यः शास्यो राज्ञान्यथा गुरुः १४
समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम्
प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता १५
स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् १६
आचार्य शिक्षयेदेनं स्वगृहे दत्तभोजनम्
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् १७
शिक्षयन्तमदुष्टं य आचार्यः संपरित्यजेत्
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति १८
शिक्षितोऽपि कृतं कालमन्तेवासी समाप्नुयात्
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् १९
गृहीतशिल्पः समये कृत्वाचार्यप्रदक्षिणम्
शक्तितश्चानुमान्यैनमन्तेवासी निवर्तते २०

वेतनं वा यदि कृतं ज्ञात्वा शिष्यस्य कौशलम्
अन्तेवासी समादद्यान्न चान्यस्य गृहे वसेत् २१
भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः
शक्तिभक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः २२
उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीबलः
अधमो भारवाहः स्वादित्येष त्रिविधो भृतः २३
अर्थेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि
सोऽपि कर्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः २४
शुभकर्मकरास्त्वेते चत्वारः समुदाहृताः
जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः २५
गृहे जातस्तथा क्रीतो लब्धो दायादुपागतः
अनाकालभृतो लोके आहितः स्वामिना च यः २६
मोक्षितो महतश्चर्णात्प्राप्तो युद्धात्पणे जितः
तथाहमित्युपगतः प्रव्रज्यावसितः कृतः २७
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदशः स्मृताः २८
तत्र पूर्वश्चतुर्वर्गो दासत्वान्न मिमुच्यते
प्रसादाद्धनिनोऽन्यत्र दास्यमेषां क्रमागतम् २९
यश्चैषां स्वामिनं कश्चिन्मोक्षयेत प्राणसंशयात्
दासत्वात्स विमुच्यते पुत्रभागं लभेत च ३०
अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत्
संभक्षितं यद्दुर्भिक्षे न तच्छुध्येत कर्मणा ३१
आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत्
अथोपगमयेदेनं स विक्रीतादनन्तरः ३२
ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते
कृतकालव्यपगमात्कृतकोऽपि विमुच्यते ३३
तवाहमित्युपगतो ध्वजप्राप्तः पणार्जितः
प्रतिशीर्षप्रदानेन मुच्यते तुल्यकर्मणा ३४

राज्ञामेव तु दासः स्यात्प्रव्रज्यावसितो नरः
न तस्य विप्रमोक्षोऽस्ति न विशुद्धिः कथंचन ३५
भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते
निग्रहाद्वडवानां तु मुच्यते वडवाहृतः ३६
विक्रीणीते य आत्मानं स्वतन्त्रः सन्नराधमः
स जघन्यतरस्तेषां नैव दास्यात्प्रमुच्यते ३७
चौरापहृतविक्रीता ये च दासीकृता बलात्
राज्ञा मोक्षयितव्यास्ते दासत्वं तेषु नेष्यते ३८
वर्णानां प्रातिलोम्येन दासत्वं न विधीयते
स्वधर्मत्यागिनोऽन्यत्र द्वारवद्दासता मता ३९
तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम् ४०
अधनास्त्रय एवोक्ता भार्या दासस्तथा सुतः
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ४१
स्वदासमिच्छेद्यः कर्तुमदासं प्रीतमानसः
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ४२
साक्षताभिः सपुष्पाभिर्मुर्धन्यद्भिरवाकिरेत्
अदास इति चोक्त्वा त्रिः प्रांमुखं तमथोत्सृजेत् ४३
इति अभ्युपेत्याशुश्रूषा नाम पञ्चमं व्यवहारपदं समाप्तम्

## वेतनस्यानपाकर्म

भृतानां वेतनस्योक्तो दानादानविधिक्रमः
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् १
भृताय वेतनं दद्यात्कर्मस्वामी यथाक्रमम्
आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चितम् २
भृतावनिश्चितायां तु दशभागं समाप्नुयुः
लाभगोबीजशस्यानां वणिग्गोपकृषीबलाः ३
क्रियोपकरणं चैषां क्रियां यत्प्रत्युदाहृतम्

तत्स्वभावेन कुर्वीत न जिह्मेन समाचरेत्  ४
कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्
भृतिं गृहित्वाकुर्वाणो द्विगुणां भृतिमावहेत्  ५
भृतिषड्भागमादद्यात्पण्यं युग्यकृतं त्यजन्
अददत्कारयित्वां तु सोदयां भृतिमावहेत्  ६
अनयन्भाटयित्वा तु भाण्डवान्यानवाहने
दाप्यो भृतिचतुर्भागं सममर्धपथे त्यजन्  ७
अनयन्वाहकोऽप्येवं भृतिहानिमवाप्नुयात्
द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन्  ८
भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः
स दाप्यो यत्प्रणष्टं स्याद्दैवराजकृतादृते  ९
गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद्भृतिः
प्रति सम्वत्सरं गोपे संदोहचाष्टमेऽहनि  १०
उपानयति या गोपः प्रत्यहं रजनीक्षये
चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्युपानयेत्  ११
सा चेद्गौर्व्यसनं गच्छेद्व्यायच्छेत्तत्र शक्तितः
अशक्तस्तूर्णमागम्य स्वामिने तन्निवेदयेत्  १२
अव्यायच्छन्नविक्रोशन् स्वामिने चानिवेदयन्
वोढुमर्हति गोपस्तां विनयं चापि राजनि  १३
नष्टविनष्टं कृमिभिः श्वहतं विपमे मृतम्
हीनं पुरुषकारेण पालयैव निपातयेत्  १४
अजाविके तथारुद्धे वृकैः पाले त्वनायति
यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत्  १५
विधुष्यापहृतं चौरैर्न पालो दातुमर्हति
यदि देशे च काले च स्वामिनश्चापि शंसति  १६
अनेन सर्वपालानां विवादः समुदाहृतः
मृतेषु च विशुद्धिः स्याद्वालशृङ्गादिदर्शनात्  १७
शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विस्तदाप्नुयात्

अप्रयच्छंस्तदा शुल्कमनुभूय पुमान् स्त्रियम् १८
अयोनौ वा समाक्रामेद्बहुभिर्वापि वासयेत्
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु १९
पराजिरे गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् २०
स्तोमं विना वसित्वा तु परभूमावनिच्छतः
निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात्कदाचन २१
स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्
ग्रहीतुराभवेद्भग्नं नष्टं चान्यत्र संप्लवात् २२
इति नारदीयधर्मशास्त्रे वेतनस्यानपाकर्मेति षष्ठं व्यवहारपदम्

## अस्वामिविक्रयः

निक्षिप्तं वा परद्रव्यं नष्टं लब्धापहृत्य वा
विक्रीयतेऽसमक्षं यद्विज्ञेयोऽस्वामिविक्रयः १
द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी समाप्नुयात्
प्रकाशविक्रये शुद्धिः क्रेतुः स्तेयं रहः क्रमात् २
अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ३
न गूहेतागमं क्रेता शुद्धिस्तस्य तदागमात्
विपर्यये तुल्यदोषः स्तेयदण्डं च सोऽर्हति ४
विक्रेता स्वामिनेऽर्थं स्वं क्रेत्रे मूल्यं च तत्समम्
दद्याद्दण्डं तथा राज्ञे विधिरस्वामिविक्रये ५
परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम्
राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते ६
ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत्
तेन दत्तं च भुञ्जीत स्तेनः स्यादनिवेदयन् ७
स्वमप्यर्थं तथा नष्टं लब्ध्वा राज्ञे निवेदयेत्
गृह्णीयात्तत्र तं शुद्धमशुद्धं स्यात्ततोऽन्यथा ८

इति नारदीयधर्मशास्त्रेऽस्वामिविक्रयो नाम सप्तमं व्यवहारपदम्

विक्रीयासम्प्रदानम्

विक्रीय पण्यं मूल्येन क्रेत्रे यन्न प्रदीयते
विक्रीयासम्प्रदानं तद्विवादपदमुच्यते १
लोकेऽस्मिन् द्विविधं द्रव्यं जङ्गमं स्थावरं तथा
क्रयविक्रयधर्मेषु सर्वं तत्पण्यमुच्यते २
षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ३
विक्रीय पण्यं मूल्येन क्रेत्रे यो न प्रयच्छति
स्थावरस्योदयं दाप्यो जङ्गमस्य क्रियाफलम् ४
अर्घश्चेदपचीयेत सोदयं पण्यमावहेत्
स्थायिनामेष नियमो दिग्लाभो दिग्विचारिणाम् ५
उपहन्येत वा द्रव्यं दह्येतापह्रियेत वा
विक्रेतुरेव सोऽनर्थो विक्रियासम्प्रयच्छतः ६
निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति
मूल्यं तु द्विगुणं दाप्यो विनयं तावदेव च ७
तदान्यहस्तविक्रीतं योऽन्यस्मै सम्प्रयच्छति
सोऽपि तद्द्विगुणं दाप्यो विनयं चैव राजनि ८
दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ९
दत्तमूल्यस्य पण्यस्य विधिरेवं प्रकीर्तितः
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः १०
लाभार्थे वणिजां सर्वपण्येषु क्रयविक्रयः
स च लाभोऽर्धमासाद्य महान्भवति वा न वा ११
तस्माद्देशे च काले च वणिगर्धं समाश्रयेत्
न जिह्मं च प्रवर्त्तेत श्रेयानेवं वणिक्पथः १२

इति नारदीयधर्मशास्त्रे विक्रीयासम्प्रदानं नामाष्टमं व्यवहारपदम्

## क्रीतानुशयः

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते
क्रीतानुशय इत्येतद्विवादपदमुच्यते १
क्रीत्वा मूल्येन यत्पण्यं दुष्कृतं मन्यते क्रयी
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् २
द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमाहरेत्
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ३
क्रेता पण्यं परीक्षेत प्राक्स्वयं गुणदोषतः
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ४
त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु
मणिमुक्ताप्रबालानां सप्ताहः स्यात्परीक्षणम् ५
द्विपदामर्धमासः स्यात्पुंसां तद्द्विगुणं स्त्रियाः
दशाहः सर्वबीजानामेकाहो लोहवाससाम् ६
परिभुक्तं च यद्वासः क्लिष्टरूपं मलीमसम्
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ७
मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः
द्विः पादस्त्रिस्त्रिभागस्तु चतुःकृत्वोऽर्धमेव च ८
अर्धक्षयात्तु परतः पादांशापचयः क्रमात्
यावत्क्षीणदशं जीर्णं जीर्णस्यानियमः क्षये ९
लोहानामपि सर्वेषां हेतुरग्निक्रियाविधौ
क्षयः संस्क्रियमाणानां तेषां दृष्टोऽग्निसंगमात् १०
सुवर्णस्य क्षयो नास्ति राजते द्विपलं शतम्
शतमष्टपलं ज्ञेयं क्षयस्तु त्रपुसीसयोः ११
ताम्रे पञ्चपलं विद्याद्विकारा ये च तन्मयाः
तद्धातूनामनेकत्वादयसोऽनियमः क्षये १२
तान्तवस्य च संस्कारे क्षयवृद्धी उदाहृते
सूत्रकार्पासिकीर्णानां वृद्धिर्दशपलं शतम् १३
स्थूलसूत्रवतां तेषां मध्यानां पञ्चकं शतम्

त्रिपलं तु सुसूक्ष्माणामेषा वृद्धिरुदाहृता १४
त्रिंशांशो रोमबद्धस्य क्षयः कर्मकृतस्य तु
कौशेयवल्कलानां तु सैव वृद्धिर्न च क्षयः १५
क्रीत्वा नानुशयं कुर्याद्वणिक् पण्यविचक्षणः
वृद्धिक्षयौ तु जानीयात्पण्यानामागमं तथा १६
इति नारदीयधर्मशास्त्रे क्रीतानुशयो नाम नवमं व्यवहारपदम्

## समयस्यानपाकर्म

पाषण्डिनैगमादीनां स्थितिः समय उच्यते
समस्यानपाकर्म तद्विवादपदं स्मृतम् १
पाषण्डिनैगमश्रेणीपूगव्रातगणादिषु
संरक्षेत्समयं राजा दूर्गे जनपदे तथा २
यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ३
नानुकूलं च यद्राजा प्रकृत्यवमतं च यत्
वाधकं च यदर्थानां तत्तेभ्यो विनिवर्तयेत् ४
मिथः संघातकरणमहितं शस्त्रधारणम्
परस्परोपघातं च तेषां राजा न मर्षयेत् ५
पृथग्गणांश्च ये भिन्द्युस्ते विनेया विशेषतः
आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपेक्षिताः ६
दोषवत्करणं यत्स्यादनाम्नायप्रकल्पितम्
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत् ७
इति नारदीयधर्मशास्त्रे समयस्यानपाकर्म नाम दशमं विवादपदम्

## सीमाबन्धः

सेतुकेदारमर्यादाविकृष्टाकृष्टनिश्चये
क्षेत्राधिकारो यस्तु स्याद्विवादः क्षेत्रजस्तु सः १
क्षेत्रसीमाविवादेषु सामन्तेभ्यो विनिश्चयः

नगरग्रामगणिनो ये च वृद्धतमा नराः २
ग्रामसीमासु च बहिर्ये स्युस्तत्कृषिजीविनः
गोपशाकुनिकव्याधा ये चान्ये वनजीविनः ३
समुन्नयेयुस्तेसीमां लक्षणैरुपलक्षिताम्
तुषाङ्गारकपालैश्च कूपैरायतनैर्द्रुमैः ४
अभिज्ञातैश्च बल्मीकस्थलनिम्नोन्नतादिभिः
केदारारामभार्गैश्च पुराणैः सेतुभिस्तथा ५
निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु
तत्प्रदेशानुमानाच्च प्रमाणैर्भोगदर्शनैः ६
अथ चेदनृतं ब्रूयुः सामन्तास्तद्विनिश्चये
सर्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ७
गणवृद्धादयस्त्वन्ये दण्ड दाप्याः पृथक्पृथक्
विनेयाः प्रथमेन स्युः साहसेनानृते स्थिताः ८
नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ९
एकश्चेदुन्नयेत्सीमां सोपवासाः समाहितः
रक्तमाल्याम्बरधरः क्षितिमारोप्य मूर्धनि १०
यदि च न स्युर्ज्ञातारः सीमायाश्च न लक्षणम्
तदा राज्ञा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ११
एतेनैव गृहोद्यानंनिपानायतनादिषु
विवादविधिराख्यातस्तथा ग्रामान्तरेषु च १२
सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः
फलपुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् १३
अन्यक्षेत्रोपजातानां शाखास्त्वन्यत्र संस्थिताः
स्वामिनस्ता विजानीयादन्यक्षेत्रविनिर्गताः १४
अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः
चतुष्पथसुरस्थानरथ्यामार्गान्न रोधयेत् १५
रोधयन्ति तु ये मोहाद्बलाद्वापि कथञ्चन

दण्डयेत्तादृशान्राजा साहसेनोत्तमेन च १६
परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते
महागुणोऽल्पबाधश्च वृद्धिरिष्टा क्षये सति १७
सेतुस्तु द्विविधः प्रोक्तः खेयो बन्ध्यस्तथैव च
तोयप्रवर्तनात्खेयो बन्ध्यः स्यात्तन्निवर्तनात् १८
नान्तरेणोदकं सस्यं नश्येदभ्युदकेन तु
य एवानुदके दोषः स एवाभ्युदके स्मृतः १९
पूर्वप्रवर्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः
सेतुं प्रवर्तयेत् कश्चिन्न स तत्फलभाग्भवेत् २०
मृते तु स्वामिनि पुनस्तद्वंश्ये वापि मानवे
राजानमामन्त्र्य ततः प्रकुर्यात्सेतुकर्म तत् २१
अतोऽन्यथा क्लेशभाक् स्यान्मृगव्याधानुदर्शनात्
इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति २२
अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः
क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम् २३
विकृष्यमाणे क्षेत्रे चेत्क्षेत्रिकः पुनराव्रजेत्
खिलोपचारं तत्सर्वं दत्त्वा स्वक्षेत्रमाप्नुयात् २४
तदष्टभागापचयाद्यावत्सप्त गताः समाः
संप्राप्ते त्वष्टमे वर्षे भुक्तं क्षेत्रं लभेत सः २५
सम्वत्सरेणार्धखिलं खिलं तद्वत्सरैस्त्रिभिः
पञ्चवर्षावसन्नं तु स्यात्क्षेत्रमटवीसमम् २६
क्षेत्रं त्रिपुरुषं यत्स्याद्गृहं वा स्यात्क्रमागतम्
राजप्रसादादन्यत्र न तद्भोगः परं नयेत् २७
उत्क्रम्य तु वृतिं यत्र सस्यघातो गवादिभिः
पालः शास्यो भवेत्तत्र न चेच्छक्त्या निवारयेत् २८
समूलसस्यघाते तु तत्स्वामी सममाप्नुयात्
वधेन पालो मुच्येत दण्डं स्वामिनि पातयेत् २९
गौः प्रसूता दशाहं च महोक्षो वाजिकुञ्जरौ

निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभाक् ३०
माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा
अजाविके सवत्से तु दण्डः स्यादर्धमाषकः ३१
अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते मताः
अदण्ड्यागन्तुकी गौश्च सूतिका वाभिसारिणी ३२
नष्टा भग्ना च लग्ना च वृषभः कृतलक्षणः
प्रीक्तं तु च्छिन्ननासायां वसन्त्यां तु चतुर्गुणम् ३३
सन्नानां द्विगुणः प्रोक्तो वसतां तु चतुर्गुणः
प्रत्यक्षचारकाणां तु चौरदण्डः स्मृतो नृणाम् ३४
या नष्टाः पालदोषेण गावः क्षेत्रं यदाप्नुयुः
न तत्र गोमिनां दण्डः पालस्तं दण्डमर्हति ३५
राजग्राहगृहीतो वा वज्राशनिहतोऽपि वा
अथ सर्पेण दष्टो वा वृक्षाद्वा पतितो भवेत् ३६
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम् ३७
गोभिस्तु भक्षितं धान्यं यो नरः प्रतियाचते
सामन्तानुमते देयं धान्यं यत्तत्र भक्षितम् ३८
गावस्तु गोमिना देया धान्यं तत्कर्षिकस्य तु
एवं हि विनयः प्रोक्तो गोपैः सस्यावपातनात् ३९
ग्रामोपान्ते च यत्क्षेत्रं विवीतान्ते महापथे
अनावृते चेत्तन्नाशे न पालस्य व्यतिक्रमः ४०
पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत्
न लंघयेत्पशुर्वाश्वो न भिन्द्याद्यां च शूकरः ४१
गृहक्षेत्रे च दृष्टे द्वे वासहेतू कुटुम्बिनाम्
तस्मात्ते नोत्क्षिपेद्राजा तद्धि मूलं कुटुम्बिनाम् ४२
वृद्धे जनपदे राज्ञो धर्मः कोशश्च वर्धते
हीयते हीयमाने च वृद्धिहेतुमतः श्रयेत् ४३
इति नारदीये धर्मशास्त्रे सीमाबन्धो नामैकादशं व्यवहारपदम्

## स्त्रीपुंसयोगः

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते
स्त्रीपुंसयोगनामैतद्विवादपदमुच्यते १
स्त्रीपुंसयोस्तु सम्बन्धे वरणं प्राग्विधीयते
वरणाद्ग्रहणं पाणेः संस्कारोऽथ द्विलक्षणः २
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्
पाणिग्रहणमन्यत्रश्च नियतं दारलक्षणम् ३
ब्राह्मणक्षत्रियधिशां शूद्राणां च परिग्रहे
सजातिः श्रेयसी भार्या सजातिश्च पतिः स्त्रियाः ४
ब्राह्मणस्यानुलोम्येन स्त्रियोऽन्यास्तिस्र एव तु
शूद्रायाः प्रातिलोम्येन तथान्ये पतयस्त्रयः ५
द्वे भार्ये क्षत्रियस्यान्ये वैश्यस्यैका प्रकीर्तिता
वैश्याया द्वौ पती ज्ञेयावेकोऽन्यः क्षत्रियापतिः ६
आ सप्तमात्पञ्चमाद्वा बन्धुभ्यः पितृमातृतः
अविवाह्याः सगोत्राः स्युः समानप्रवरास्तथा ७
परीक्ष्यः पुरुषः पुंस्त्वे निजैरेवाङ्गलक्षणैः
पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ८
सुबद्धजत्रुजान्वस्थिः सुबद्धांशशिरोरुहः
स्थूलघाटस्तनूरुत्वगविलम्नगतिस्वरः ९
रेतोऽस्योत्प्लवते नाप्सु ह्लादि मूत्रं च फेनिलम्
पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः १०
चतुर्दशविधः शास्त्रे षण्ढो दृष्टो मनीषिभिः
चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ११
निसर्गषण्ढो वध्रिश्च पक्षषण्डस्तथैव च
अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च १२
ईर्ष्याषिण्ढश्च सेव्यश्च वातरेता मुत्खेभगः
आक्षिप्तो मोघबीजश्च शालीनोऽन्यापतिस्तथा १३
तत्राद्यावप्रतीकारौ पक्षाख्यो मासमाचरेत्

अनुक्रमात्तु यस्यास्य कालः सम्वत्सरः स्मृतः १४
ईर्ष्याषण्डादयो येऽन्ये चत्वारः समुदाहृताः
त्यक्तव्यास्ते पतितवत्क्षतयोन्या अपि स्त्रिया १५
आक्षिप्तमोघबीजाभ्यां कृतेऽपि पतिकर्मणि
पतिरन्यः स्मृतो नार्या वत्सरार्धं प्रतीक्ष्य तु १६
शालीनस्यापि दृष्टस्त्रीसंयोगाद् भ्रश्यते ध्वजः
तं हीनवेगमन्यस्त्रीबालाद्याभिरुपाचरेत् १७
अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति
लभेत सान्यं भर्तारमेतत्कार्यं प्रजापतेः १८
अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति १९
पिता दद्यात्स्वयं कन्यां भ्राता वानुमते पितुः
पितामही मातुलश्च सकुल्या बान्धवास्तथा २०
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते
तस्यामप्रकृतिस्थायां दद्युः कन्यां सनाभ्यः २१
यदा तु नैव कश्चित्स्यात्कन्या राजानमाश्रयेत्
अनुज्ञया तस्य वरं प्रतीत्य वरयेत्स्वयम् २२
सवर्णमनुरूपं च कुलशीलवयःश्रुतैः
सह धर्मं चरेत्तेन प्रज्ञां चोत्पादयेत्ततः २३
प्रतिगृह्य च यः कन्यां वरो देशान्तरं व्रजेत्
त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम् २४
कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत्
ते चेन्न दद्युस्तां भर्त्रे ते स्युर्भ्रूणहभिः समाः २५
यावन्तश्चर्तवस्तस्याः समतीयुः पतिं विना
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम् २६
अतः प्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्
महोदेनः स्पृशेदेनमन्यथैवं विधिः सताम् २७
सकृदंशो निपतति सकृत्कन्या प्रदीयते

सकृदाह ददानीति त्रीरयेतानि सतां सकृत् २८
ब्राह्मादिषु विवाहेषु पञ्चस्वेष विधिः स्मृतः
गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु २९
कन्यायां दत्तशुल्कायां ज्यायांश्चेद्वर आव्रजेत्
धर्मार्थकामसंयुक्तो वाक्यं तत्रानृतं भवेत् ३०
नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम्
दोषे तु सति नागः स्यादन्योन्यं त्यजतोस्तयोः ३१
दत्त्वा न्यायेन यः कन्यां वराय न ददाति ताम्
अदुष्टश्चेद्वरो राजा स दरडयस्तत्र चौरवत् ३२
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति
तस्य कुर्यान्नृपो दरडं पूर्वसाहसचोदितम् ३३
अकन्येति तु यः कन्यां ब्रूयाद् द्वेषेण मानवः
स शतं प्राप्नुयाद्दरडं तस्या दोषमदर्शयन् ३४
प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेन्नरः
स विनेयस्त्वकामोऽपि कन्यां तामेव चोद्वहेत् ३५
दीर्घकुत्सितरोगार्तां व्यङ्गा संसृष्टमैथुना
दुष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः ३६
उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः
कन्यादोषौ च यौ पूर्वौ एष दोषगणो वरे ३७
अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्तिताः
ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथापरः ३८
आर्षश्चैव हि दैवश्च गान्धर्वश्चासुरस्तथा
राक्षसोऽनवरस्तस्मात्पैशाचस्त्वष्टमः स्मृतः ३९
सकृत्याहूय कन्यां तु दद्यात् ब्राह्मे त्वलंकृताम्
सह धर्मं चरेत्युक्ता प्राजापत्यो विधिः स्मृतः ४०
वस्त्रगोमिथुनाभ्यां तु विवाहस्त्वार्ष उच्यते
अन्तर्वेद्यां तु दैवः स्यादृत्विजे कर्म कुर्वते ४१
इच्छन्तीमिच्छतः प्राहुर्गान्धर्वं नाम पञ्चमम्

विवाहस्त्वासुरो ज्ञेयः शुल्कसंव्यवहारतः ४२
प्रसह्य हरणादुक्तो विवाहो राक्षसस्तथा
सुप्तप्रमत्तोपगमात्पैशाचस्त्वष्टमोऽधमः ४३
एषां तु धर्म्याश्चत्वारो ब्राह्माद्याः समुदाहृताः
साधारणः स्याद्गान्धर्वस्त्रयोऽधर्म्यास्ततः परे ४४
परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ४५
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारमर्हति ४६
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता
पुनः पत्युर्गृहमियात्सा द्वितीया प्रकीर्तिता ४७
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ४८
स्त्री प्रसूताप्रसूता वा पत्यावेव तु जीवति
कामाद्या संश्रयेदन्यं प्रथमा स्वैरिणी तु सा ४९
मृते भर्तरि संप्राप्तान्देवरादीनपास्य या
उपगच्छेत्परं कामात्सा द्वितीया प्रकीर्तिता ५०
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या
तवाहमित्युपगता सा तृतीया प्रकीर्तिता ५१
देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते
उत्पन्नसाहसान्यस्मै अन्त्या सा स्वैरिणी स्मृता ५२
पुनर्भुवां विधिस्त्वेष स्वैरिणीनां प्रकीर्तितः
पूर्वा पूर्वा जघन्यासां श्रेयसी तूत्तरोत्तरा ५३
अपत्यमुत्पादयितुस्तासां या शुल्कतो हृता
अशुल्कोपहृतायां तु क्षेत्रिकस्यैव तत्फलम् ५४
क्षेत्रिकस्य यदज्ञातं क्षेत्रे बीजं प्रदीयते
न तत्र बीजिनो भागः क्षेत्रिकस्यैव तत्फलम् ५५
ओघवाताहृतं बीजं क्षेत्रे यस्य प्ररोहति

फलभुक्तस्य तत्क्षेत्री न बीजी फलभाग्भवेत्  ५६
महोक्षो जनयेद्वत्सान्यस्य गोषु व्रजे चरन्
तस्य ते यस्य ता गावो मोघं स्कन्दितमार्षभम्  ५७
क्षेत्रिकानुमते बीजं यस्य क्षेत्रे समर्प्यते
तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम्  ५८
न स्यात्क्षेत्रं विना सस्यं न वा बीजं विनास्ति तत्
अतोऽपत्यं द्वयोरिष्टं पितुर्मातुश्च धर्मतः  ५९
नाप्यपत्यं परगृहे संयुक्तस्य स्त्रिया सह
दृष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे  ६०
अदुष्टत्यक्तदारस्य क्लीबस्य क्षयिकस्य च
सेच्छानुपेयुषो दारान्न दोषः साहसे भवेत्  ६१
परस्त्रिया सहाकालेऽदेशे वा भवतो मिथः
स्थानसंभाषणामोदा स्त्रयः संग्रहणक्रमाः  ६२
नदीनां संगमे तीर्थेष्वारामेषु वनेषु च
स्त्रीपुंसौ यत्समीयातां तच्च संग्रहणं स्मृतम्  ६३
दूतीप्रस्थापनैर्वापि लेखसंप्रेषणैरपि
अन्यैश्च विविधैर्दोषैर्ग्राह्यं संग्रहणं बुधैः  ६४
स्त्रियं स्पृशेददेशे यः स्पृष्टोः वा मर्षयेत्तथा
परस्परस्यानुमतं सर्वं संग्रहणं स्मृतम्  ६५
उपकारक्रिया केलिः स्पर्शो भूषणवाससाम्
सहखट्वासनं चैव सर्वं संग्रहणं स्मृतम्  ६६
पाणौ यच्च निगृह्णीयाद्वेणयां वस्त्राञ्चलेऽपि वा
तिष्ठ तिष्ठेति वा ब्रूयात्सर्वं संग्रहणं स्मृतम्  ६७
वस्त्रेराभरणैर्माल्यैः पानैर्भक्ष्यैस्तथैव च
संप्रेष्यमाणैर्गन्धैश्च वेद्यं संग्रहणं बुधैः  ६८
दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत्
ममेयं भुक्तपूर्वेति तच्च संग्रहणं स्मृतम्  ६९
सजात्यतिशये पुंसां दण्ड उत्तमसाहसः

मध्यमस्त्वानुलोम्येन प्रातिलोम्ये प्रमापणम् ७०
कन्यायामसकामायां द्व्यङ्गुलस्यावकर्तनम्
उत्तमायां वधस्त्वेव सर्वसंग्रहणं तथा ७१
सकामायां तु कन्यायां सङ्गमे नास्त्यतिक्रमः
किंत्वलंकृत्य सत्कृत्य स एवैनां समुद्वहेत् ७२
माता मातृष्वसाश्वश्रूर्मातुलानी पितृष्वसा
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ७३
दुहिताचार्यभार्या च सगोत्रा शरणागता
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ७४
आसामन्यतमां गत्वा गुरुतल्पग उच्यते
शिश्नस्योत्कर्तनं तस्य नान्यो दण्डो विधीयते ७५
पशुयोनावतिक्रामन् विनेयः स दमं शतम्
मध्यमं साहसं गोषु तदेवान्त्यावसायिषु ७६
अगम्यागामिनश्चास्ति दण्डो राज्ञा प्रचोदितः
प्रायश्चित्तविधानं तु पापानां स्याद्विशोधनम् ७७
स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ७८
आस्वेव तु भुजिष्यासु दोषः स्यात्परादारवत्
गम्या अपि हि नोपेया यत्ताः परपरिग्रहाः ७९
अनुत्पन्नप्रजायास्तु पतिः प्रेयाद्यदि स्त्रिया
नियुक्ता गुरुभिर्गच्छेद्देवरं पुत्रकाम्यया ८०
स च तां प्रतिपद्येत तथैवा पुत्रजन्मतः
पुत्रे जाते निवर्तेत संकरः स्यादतोऽन्यथा ८१
घृतेनाभ्यज्य गात्राणि तैलेनाविकृतेन वा
मुखान्मुखं परिहरन् गात्रैर्गात्राण्यसंस्पृशन् ८२
कुले तदवशेषे हि सन्तानार्थं न कामतः
स्त्रियं पुत्रवतीं वन्ध्यां नीरजस्कामनिच्छतीम् ८३
न गच्छेद्गर्भिणीं निन्द्यामनियुक्तां च बन्धुभिः

अनियुक्ता तु या नारी देवराज्जनयेत्सुतम् ८४
जारजातमरिक्थीयं तमाहुर्ब्रह्मवादिनः
तथानियुक्तो यो भार्यां यवीयाञ्ज्यायसो व्रजेत् ८५
यवीयसो वा यो ज्यायानुभौ तौ गुरुतल्पगौ
नियुक्तो गुरुभिर्गच्छेदनुशिष्यात्स्त्रियं च सः ८६
पूर्वोक्तेन विधानेन स्नुषां पुंसवने शुचिः
सकृदागर्भाधानाद्वा कृते गर्भे तथैव सा ८७
अतोऽन्यथा वर्तमानः पुमान्स्त्री वापि कामतः
विनेयौ सुभृशं राज्ञा विप्लवः स्यादतोऽन्यथा ८८
ईर्ष्यासूयसमुत्थे तु सम्बन्धे रागहेतुके
दम्पती विवदीयातां न ज्ञातिषु न राजनि ८९
अन्योन्यं त्यजतो रागः स्यादन्योन्यविरुद्धयोः
स्त्रीपुंसयोर्निगूढाया व्यभिचारादृते स्त्रियाः ९०
व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च
कदन्नं वा कुवासश्च कर्म चावस्करोज्झनम् ९१
स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्रंसिनीं तथा
भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेत् पुरात् ९२
अनर्थशीलां सततं तथैवाप्रियवादिनीम्
पूवाशिनीं च या भर्तुः क्षिप्रं निर्वासयेत् गृहात् ९३
वन्ध्यां स्त्रीजननीं निन्द्यां प्रतिकूलां च सर्वदा
कामती नाभिनन्देत कुर्वन्नेवं स दोषभाक् ९४
अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम्
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ९५
अज्ञातदोषेणोढा या निर्दोषा नान्यमाश्रिता
बन्धुभिः साभियोक्तव्या निर्बन्धुः स्वयमाश्रयेत् ९६
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ९७
अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी प्रोषितं पतिम्

अप्रसूता तु चत्वारि परतोऽन्यं समाश्रयेत् ९८
क्षत्रिया षट्समास्तिष्ठेदप्रसूता समात्रयम्
वैश्या प्रसूता चत्वारि द्वे वर्षे त्वितरा वसेत् ९९
न शूद्रायाः स्मृतः काल एष प्रोषितयोषिताम्
जीवति श्रूयमाणे तु स्यादेष द्विगुणो विधिः १००
अप्रवृत्तौ तु भूतानां दृष्टिरेषा प्रजापतेः
अतोऽन्यगने स्त्रीणामेष दोषो न विद्यते १०१
आनुलोम्येन वर्णानां यज्जन्म स विधिः स्मृतः
प्रातिलोम्येन यज्जन्म स ज्ञेयो वर्णसंकरः १०२
अनन्तरः स्मृतः पुत्रः पुत्र एकान्तरस्तथा
द्व्यन्तरश्चानुलोम्येन तथैव प्रतिलोमतः १०३
उग्रः पारशवश्चैव निषादश्चानुलोमतः
अम्बष्ठो मागधश्चैव क्षत्ता च क्षत्रियात्मजः १०४
आनुलोम्येन तत्रैका द्वौ ज्ञेयौ प्रतिलोमतः
क्षत्राद्याः प्रतिलोमाः स्युरनुलोमास्त्विमे स्मृताः १०५
संस्काराश्चरुपाकाद्यास्तेषां त्रिः सप्त वै मताः
सवर्णो ब्राह्मणीपुत्रः क्षत्रियायामनन्तरः १०६
अम्बष्ठोग्रौ तथा पुत्रावेवं क्षत्रियवैश्ययोः
एकान्तरस्तु चाम्बष्ठो वैश्यायां ब्रह्मणात्सुतः १०७
शूद्रायां क्षत्रियात्तद्वन्निषादो नाम जायते
शूद्रा पारशवं सूते ब्राह्मणादुत्तरं सुतम् १०८
आनुलोम्येन वर्णानां पुत्रा ह्येते प्रकीर्तिताः
सूतश्च मागधश्चैव पुत्रावायोगवस्तथा १०९
प्रातिलोम्येन वर्णानां क्षत्तृवैदेहकावपि
अनन्तरः स्मृतः सूतो ब्राह्मण्यां क्षत्रियात्सुतः ११०
मागधायोगवौ तद्वद्द्वौ पुत्रौ वैश्यशूद्रयोः
ब्राह्मण्येकान्तरं वैश्यात्सूते वैदेहकं सुतम् १११
क्षत्तारं क्षत्रिया शूद्रात्पुत्रमेकान्तरं तथा

द्व्यन्तरः प्रातिलोम्येन पापिष्ठः संकरे सति  ११२
चराडालो जायते शूद्राद्ब्राह्मणो यत्र मुह्यति
तस्माद्राज्ञा विशेषेण स्त्रियो रद्त्यास्तु संकरात्  ११३
इति नारदीये धर्मशास्त्रे स्त्रीपुंसयोगी नाम द्वादशं व्यवहारपदं समाप्तम्

दायभागः

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः  १
पितर्यूर्ध्वं गते पुत्रा विभजेरन्धनं क्रमात्
मातुर्दुहितरोऽभावे दूहितॄणां तदन्वयः  २
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च
निवृत्ते वापि रमणे पितर्युपरतस्पृहे  ३
पितैव वा स्वयं पुत्रान्विभजेद्वयसि स्थितः
ज्येष्ठं वा श्रेष्ठभागेन यथा वास्य मतिर्भवेत्  ४
विभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता
भ्राता शक्तः कनिष्ठो वा शक्त्यपेद्माः कुले श्रियः  ५
शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत्
त्रीरयेतान्यविभाज्यानि प्रसादो यश्च पैतृकः  ६
मात्रा च स्वधनं दत्तं यस्मै स्यात्प्रीतिपूर्वकम्
तस्याप्येय विधिर्दृष्टो मातापि हि यथा पिता  ७
अध्यग्न्यध्यावाहनिकं भर्तुगाम्यप्रजासु तु
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्  ८
स्त्रीधनं तदपत्यानां भर्तुगाम्यप्रजासु तु
ब्राह्मादिषु चतुर्ष्वाहुः पितृगामीतरेषु च  ९
कुटुम्बं विभृयाद् भ्रातुर्यो विद्यामधिगच्छतः
भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन्  १०
वैद्योऽवैद्याय नाकामो दद्यादंशं स्वती धनात्
पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदाहृतम्  ११

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता
समांशभागिनी माता पुत्राणां स्यान्मृते पतौ १२
ज्येष्ठायांशोऽधिको देयः कनिष्ठायावरः स्मृतः
समांमशभाजः शेषाः स्युरप्रत्ता भगिनी तथा १३
क्षेत्रजेष्वपि पुत्रेषु तद्वज्जातेषु धर्मतः
वर्णावरेष्वंशहानिरूढाजातेष्वनुक्रमात् १४
पित्रैव तु विभक्ता ये हीनाधिकसमैर्धनैः
तेषां स एव धर्मः स्यात्सर्वस्य हि पिता प्रभुः १५
व्याधितः कुपितश्चैव विषयासक्तमानसः
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः १६
कानीनश्च सहोढश्च गूढायां यश्च जायते
तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृताः १७
अज्ञातपितृको यश्च कानीनोऽनूढमातृकः
मातामहाय दद्यात्स पिण्डं रिक्थं हरेत च १८
जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा
अरिक्थभाजः सर्वे स्युर्बीजिनामेव ते सुताः १९
दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता
अशुल्कोपगतायां तु पिण्डदा वोढुरेव ते २०
पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः
औरसा अपि नैतेऽशं लभेरन् क्षेत्रजाः कुतः २१
दीर्घतीव्रामयग्रस्ता जडोन्मत्तान्धपङ्गवः
भर्तव्याः स्युः कुले चैते तत्पुत्रास्त्वंशभागिनः २२
द्विरामुष्यायणा दद्युर्द्वाभ्यां पिण्डोदके पृथक्
रिक्थादर्धं समादद्युर्बीजिक्षेत्रिकयोस्तथा २३
संसृष्टानां तु यो भागस्तेषामेव स इष्यते
अनपत्योंऽशभाग्योऽपि निर्बीजेष्वितरानियात् २४
भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत्तु वा
विभजेरन्धनं तस्य शेषास्तु स्त्रीधनं विना २५

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवितक्षयात्
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु च २६
या तस्य दुहिता तस्याः पित्र्योंऽशो भरणे मतः
आ संस्कारं भजेरंस्तां परतो विभृयात्पतिः २७
मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः
विनियोगात्मरक्षासु भरणे च स ईश्वरः २८
परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये
तत्सपिण्डेषु वासत्सु पितृपक्षः प्रभुः स्त्रियाः २९
स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः
अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत् ३०
पिता रक्षति कौमारे भर्ता रक्षति यौवने
पुत्रास्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ३१
यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत्
भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्यथा पिता ३२
येयां तु न कृताः पित्रा संस्कारविधयः क्रमात्
कर्तव्या भ्रातृभिस्तेषां पैतृकादेव ते धनात् ३३
अविद्यमाने पित्र्येऽर्थे स्वांशादुद्धृत्य वा पुनः
अवश्यकार्याः संस्कारा भ्रातृणां पूर्वसंस्कृतैः ३४
कुटुम्बार्थेषु यश्चोक्तस्तत्कार्यं कुरुते च यः
भ्रातृभिर्भरणीयोऽसौ ग्रासाच्छादनवाहनैः ३५
विभागधर्मसन्देहे दायादानां विनिर्णयः
ज्ञातिभिर्भागलेख्यैश्च पृथक्कार्यप्रवर्तनात् ३६
भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते
विभागे सति धर्मो हि तेषां भवेत्पृथक्पृथक् ३७
दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः ३८
साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च
विभक्ता भ्रातरः कूर्युर्नाविभक्ता परस्परम् ३९

येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थिनाम्
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान् ४०
वसेयुर्ये दशाब्दानि पृथग्धर्माः पृथक्क्रियाः
विभक्ता भ्रातरस्ते तु विज्ञेया इति निश्चयः ४१
यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः
पृथक्कर्मगुणोपेता न ते कृत्येषु सम्मताः ४२
स्वान्भागान्यदि दद्युस्ते विक्रीणीरन्नथापि वा
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य तु ४३
ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्
संसृष्टास्तेन वा ये स्युर्विभजेरन्निति स्थितिः ४४
औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ४५
पौनर्भवोऽपविद्धश्च लब्ध्वः क्रीतः कृतस्तथा
स्वयं चोपगतः पुत्रा द्वादशैत उदाहृताः ४६
एषां षड् बन्धुदायादाः षडदायादबान्धवाः
पूर्वः पूर्वः स्मृतः श्रेयाञ्जघन्यो यो य उत्तरः ४७
छिन्नभोगे गृहे क्षेत्रे सन्देहो यत्र जायते
लेख्येन भोगविद्भिर्वा साक्षिभिर्वा समाहरेत् ४८
क्रमाद्ध्येते प्रपद्येरन्मृते पितरि वा धनम्
ज्यायसो ज्यायसोऽलाभे कनीयानृक्थमर्हति ४९
पुत्राभावे तु दुहिता तुल्यसन्तानकारणात्
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ५०
अभावे तु दुहितॄणां सकुल्या बान्धवास्ततः
ततः सजातिः सर्वेषामभावे राजगामि तत् ५१
अन्यत्र ब्राह्मणेभ्यः स्याद्राजा धर्मपरायणः
तत्स्त्रीभ्यो जीवनं दद्यादेष दायविधिः स्मृतः ५२
इति नारदीये धर्मशास्त्रे दायभागो नाम त्रयोदशं व्यवहारपदं समाप्तम्

## साहसम्

सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते १
मनुष्यमारणं स्तेयं परदाराभिमर्शनम्
पारुष्यं द्विविधं ज्ञेयं साहसं च चतुर्विधम् २
तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ३
फलमूलोदकादीनां क्षेत्रोपकरणस्य च
भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ४
वासः पश्वन्नपानानां गृहोपकरणस्य च
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ५
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ६
तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ७
उत्तमे साहसे दण्डः सहस्रावर इष्यते
बधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ८
अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ९
शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात्
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च १०
स्यातां संव्यवहार्यौ तौ धृतदण्डौ तु पूर्वयोः
धृतदण्डोऽप्यसंभाष्यो ज्ञेय उत्तमसाहसे ११
तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र दृश्यते
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु १२
तदपि त्रिविधं प्रोक्तं द्रव्यापेक्षं मनीषिभिः
क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणात् १३

मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत्
शमी धान्यं कृतान्नं च क्षुद्रद्रव्यमुदाहृतम् १४
वासः कौशेयवर्जं च गोवर्जे पशवस्तथा
हिरण्यवर्जं लोहं च मध्यं व्रीहिजवा अपि १५
हिरण्यरत्नकौशेयस्त्रीपुंगोगजवाजिनः
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् १६
उपायैर्विविधैः सर्वैः कल्पयित्वापकर्षणम्
सुप्तप्रमत्तमत्तेभ्यः स्तेयमाहुर्मनीषिणः १७
सहोढग्रहणात्स्तेयं होढमत्युपभोगतः
शङ्का त्वसज्जनैकत्वादन्यायव्ययतस्तथा १८
भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम्
शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिनः १९
उत्क्रोशतां जनानां च ह्रियमाणे धने तथा
श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः २०
साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् २१
गवादिषु प्रणष्टेषु द्रव्येष्वपहृतेषु वा
पदस्यान्वेषणं कुर्युरामूलात्तद्विदो जनाः २२
ग्रामे व्रजे विविक्ते वा यत्र संनिपतेत्पदम्
वोढव्यं तद्भवेत्तेन न चेत्सोऽन्यत्र तन्नयेत् २३
पदे प्रमूढे भग्ने वा विषमत्वाज्जनान्तिके
यस्त्वासन्नतरो ग्रामो व्रजो वा तत्र पातयेत् २४
समेऽध्वनि ध्वयोर्यत्र तेन प्रायोऽशुचिर्जनः
पूर्वापवादैर्दुष्टो वा संसृष्टो वा दुरात्मभिः २५
ग्रामेष्वन्वेषणं कुर्युश्चण्डालवधकादयः
रात्रिसञ्चारिणो ये च बहिः कुर्युर्बहिश्चराः २६
स्तेनेष्वलभ्यमानेषु राजा दद्यात्स्वकाद्गृहात्
उपेक्षमाणो ह्येनस्वी धर्मादर्थाच्च हीयते २७

इति नारदीये धर्मशास्त्रे साहसं नाम चतुर्दशं व्यवहारपदं समाप्तम्

वाक्पारुष्यं दराडपारुष्यञ्च

देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम्
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते १
निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम्
गौरवानुक्रमात्तस्य दराडोऽप्यत्र क्रमाद्गुरुः २
साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम्
पातनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ३
परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः
भस्मादीनामुपक्षेपैर्दराडपारुष्यमुच्यते ४
तस्यापि दृष्टं त्रैविध्यं मृदुमध्योत्तमं क्रमात्
अवगोरणनिःशङ्कपातनक्षतदर्शनैः ५
हीनमध्योत्तमानां तु द्रव्याणामपकर्षणात्
त्रीरायेव साहसान्याहुस्तत्र कराटकशोधनम् ६
विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि
विशुद्धिर्दराडभाक्त्वं च तत्र संबध्यते यथा ७
पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः
विशेषश्चेन्न दृश्येत विनयः स्यात्समस्तयोः ८
पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ९
द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः
स तयोर्दराडमाप्नोति पूर्वो वा यदि वोत्तरः १०
श्वपाकमेदचराडालव्यङ्गेषु वधवृत्तिषु
हस्तिपव्रात्यदासेषु गुर्वाचार्यातिगेषु च ११
मर्यादातिक्रमे सद्यो घात एवानुशासनम्
न च तद्दराडपारुष्ये स्तेयमाहुर्मनीषिणः १२
यमेव ह्यतिवर्तेत नीचः सन्तं जनं नृषु

स एव विनयं कुर्यान्न तद्विनयभाग्नृपः १३
मला ह्येते मनुष्येषु धनमेषां मलात्मकम्
अपि तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् १४
शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति
वैश्योऽध्यर्धं शतं द्वे वा शूद्रस्तु वधमर्हति १५
पञ्चाशद् ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने
वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः १६
समवर्णैर्द्विजातीनां द्वादशैव व्यतिक्रमे
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् १७
काणमप्यथवा खञ्जमन्यं वापि तथाविधम्
तथ्येनापि ब्रुवन्दण्ड्यो राज्ञा कार्षापणावरम् १८
न किल्विषेणापवदेच्छास्त्रतः कृतपावनम्
न राज्ञा धृतदण्डं च दण्डभाक्तद्व्यतिक्रमात् १९
लोकोऽस्मिन् द्वाववक्त्यव्याववध्यौ च प्रकीर्तितौ
ब्राह्मणश्चैव राजा च तौ हीदं बिभ्रतो जगत् २०
पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत् २१
एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः २२
नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः
निखेयोऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः २३
धर्मोपदेशं दर्पेण द्विजानामस्य कुर्वतः
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः २४
येनाङ्गेनावरोवर्णो ब्राह्मणस्यापराध्नुयात्
तदङ्गं तस्य च्छेत्तव्यमेवं शुद्धिमवाप्नुयात् २५
सहासनमभिप्रेप्सुरुत्कृष्टस्यावकृष्टजः
कट्यां कृताङ्को निर्वास्यः स्फिचौ वास्यावकर्तयेत् २६
अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः

अवमूत्रयतः शिश्नमवशर्धयतो गुदम् २७
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्
पादयोर्दाढिकायां तु ग्रीवायां वृषणेषु च २८
त्वक्छेदकः शतं दण्ड्यो लोहितस्य च दर्शकः
मांसभेत्ता तु षन्निष्कान् प्रवास्य स्त्वस्थिभेदकः २९
उपक्रुश्य तु राजानं कर्मणि स्वे व्यवस्थितम्
जिह्वाछेदाद्भवेच्छुद्धः सर्वस्वहरणेन वा ३०
राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः
शूले तमग्नौ विपचेद्ब्रह्महत्याशताधिकम् ३१
पुत्रापराधे न पिता नाश्वे न शुनि दण्डभाक्
न मर्कटे च तत्स्वामी तेनैव प्रहितो न चेत् ३२
इति नारदीये धर्मशास्त्रे वाक्पारुष्यं दण्डपारुष्यं च पञ्चदशं व्यवहारपदम्

## द्यूतसमाह्वयम्

अक्षब्रध्नशलाकाद्यैर्देवनं जिह्मकारितम्
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् १
सभिकः कारयेद् द्यूतं देयं दद्याच्च तत्कृतम्
दशकं च शतं वृद्धिस्तस्य स्याद्द्यूतकारिणः २
द्विरभ्यस्ताः पतन्त्यक्षा ग्लहे यद्यक्षदेविनः
जयं तस्यापरस्याहुः कितवस्य पराजयम् ३
कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति
त एव तस्य द्रष्टारस्त एव स्युस्तु साक्षिणः ४
अशुद्धः कितवो नान्यदाश्रयेद्द्यूतमण्डलम्
प्रतिहन्यान्न सभिकं दापयेत्तत्स्वमिष्टतः ५
कूटाक्षदेविनः पापान्निर्हरेद्द्यूतमण्डलात्
कण्ठेऽक्षमालामासज्य स ह्येषु विनयः स्मृतः ६
अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः
न स तं प्राप्नुयात्कामं विनयं चैव सोऽर्हति ७

अथवा कितवा राज्ञे दत्त्वा भागं यथोदितम्
प्रकाशं देवनं कुर्युरेवं दोषो न विद्यते ८
इति नारदीये धर्मशास्त्रे द्यूतसमाह्वयं नाम षोडशं व्यवहारपदम्

## प्रकीर्णकम्

प्रकीर्णके पुनर्ज्ञेयो व्यवहारो नृपाश्रयः
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा १
पुरप्रदानं संभेदः प्रकृतीनां तथैव च
पाषण्डनैगमश्रेणीगणधर्मविपर्ययः २
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः
प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ३
वर्णसंकरदोषश्च तद्वृत्तिनियमस्तथा
न दृष्टं यच्च पूर्वेषु तत्सर्वं स्यात्प्रकीर्णके ४
राजा त्ववहितः सर्वानाश्रमान् परिपालयेत्
उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतीस्तथा ५
यो यो वर्णोऽपहीयेत यो य उद्रेक्रमाप्नुयात्
तं तं दृष्ट्वा स्वतो मार्गात्प्रच्युतं स्थापयेत्पथि ६
अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु
प्रसमीक्ष्यात्मनो राजा दण्डं दण्ड्येषु पातयेत् ७
श्रुतिस्मृतिविरुद्धं यद्भूतानामहितं च यत्
न तत्प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत् ८
न्यायापेतं यदन्येन राज्ञाज्ञानकृतं भवेत्
तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ९
आयुधान्यायुधीयानां शिल्पद्रव्याणि शिल्पिनाम्
वेश्यास्त्रीणामलंकारं वाद्यातोद्यादि तद्विदाम् १०
यच्च यस्योपकरणं येन जीवन्ति कारवः
सर्वस्वहरणेऽप्येतान्न राजा हर्तुमर्हति ११
अनिर्देश्यावनिन्द्यौ च राजा ब्राह्मण एव च

दीप्तिमत्त्वाच्छुचित्वाच्च यदि न स्यात्पथश्च्युतः १२
राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत्
दण्ड्यः स पापो बध्यश्च लोपयन् राजशासनम् १३
यदि राजा न सर्वेषां वर्णानां दण्डधारणम्
कुर्यात्पथो व्यपेतानां विनश्येयुरिमाः प्रजाः १४
ब्राह्मण्यं ब्राह्मणो जह्यात्क्षत्रियः क्षात्रमुत्सृजेत्
शूले मत्स्यानिवाश्नीयुर्दुर्बलान् बलवत्तराः १५
स्वकर्म जह्याद्वैश्यस्तु शूद्रः सर्वं विशेषयेत्
राजानश्चेन्नाकरिष्यन् प्रजानां दण्डधारणम् १६
सतामनुग्रहो नित्यमसतां निग्रहस्तथा
एष धर्मः स्मृतो राज्ञामर्थश्चामित्रपीडनात् १७
न लिप्यते यथा वह्निर्दहन् शश्वदपि प्रजाः
न लिप्यते यथा राजा दण्डं दण्ड्येषु पातयन् १८
प्रज्ञा तेजः पार्थिवानां सा च वाचि प्रतिष्ठिता
ते यद्ब्रूयुरसत्सद्वा स धर्मो व्यवहारिणाम् १९
राजेति संचरत्येष भूमौ साक्षात्सहस्रदृक्
न तस्याज्ञामतिक्रम्य संतिष्ठेरन् प्रजाः क्वचित् २०
रक्षाधिकासदीशत्वाद् भूतानुग्रहदर्शनात्
यदेव कुरुते राजा तत्प्रमाणमिति स्थितिः २१
निर्बलोऽपि यथा स्त्रीणां पूज्य एव पतिः सदा
प्रजानां विगुणोऽप्येवं पूज्य एव प्रजापतिः २२
राज्ञामाज्ञाभयाद्यस्मान्न च्यवेरन् पथः प्रजाः
व्यवहारादतो ज्ञेयं संवृत्तं राजशासनम् २३
स्थित्यर्थं पृथिवीपालैश्चरित्रविषयाः कृताः
चरित्रेभ्योऽस्य तत्प्राहुर्गरीयो राजशासनम् २४
तपःक्रीताः प्रजा राज्ञा प्रभुरासां ततो नृपः
ततस्तद्वचसि स्थेयं वार्ता चासां तदाश्रया २५
पञ्च रूपाणि राजानो धारयन्त्यमितौजसः

अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च २६
कारणादनिमित्तं वा यदा क्रोधवशं गतः
प्रजा दहति भूपालस्तदाग्निरभिधीयते २७
यदा तेजः समालम्ब्य विजिगीषुरुदायुधः
अभियाति परान्राजा तदेन्द्रः स उदाहृतः २८
विगतक्रोधसन्तापो हृष्टरूपो यदा नृपः
प्रजानां दर्शनं याति सोम इत्युच्यते तदा २९
धर्मासनगतः श्रीमान्दण्डं धत्ते यदा नृपः
समः सर्वेषु भूतेषु तदा वैवस्वतः स्मृतः ३०
यदा त्वर्थिगुरुप्राज्ञभृत्यादीन्पृथिवीपतिः
अनुगृह्णाति दानेन तदा स धनदः स्मृतः ३१
तस्मात्तं नावजानीयान्नाक्रोशेच्च विशेषतः
आज्ञायां चास्य तिष्ठेत मृत्युः स्यात्तद्व्यतिक्रमात् ३२
तस्य धर्मः प्रजारक्षा वृद्धप्राज्ञोपसेवनम्
दर्शनं व्यवहाराणामुत्थानं च स्वकर्मसु ३३
ब्राह्मणानुपसेवेत नित्यं राजा समाहितः
संयुक्तं ब्राह्मणैः क्षेत्रं मूलं लोकाभिवृद्धये ३४
ब्राह्मणस्यापरीहारो राजन्यासनमग्रतः
प्रथमं दर्शनं प्रातः सर्वेभ्यश्चाभिवादनम् ३५
अग्रं नवभ्यः सप्तभ्यो मार्गदानं च गच्छतः
भैक्षहेतोः परागारे प्रवेशस्त्वनिवारितः ३६
समित्पुष्पोदकादीनां ह्यस्तेयं सपरिग्रहम्
अनपेक्षः परेभ्यश्च सम्भाषश्च परस्त्रिया ३७
नदीष्ववेतनस्तारः पूर्वमुत्तारणं तथा
तरेष्वशुल्कदानं च वणिज्यायां भवेत्स्थितिः ३८
वर्तमानोऽध्वनि श्रान्तो गृह्णन्नशनः स्वयम्
ब्राह्मणो नापराधी स्याद्द्वाविक्षू द्वे च मूलके ३९
नाभिशस्तान्न पतितान्न द्विषो नापि नास्तिकात्

नोपसन्नान्निर्निमित्तं दातारं न प्रपीड्य च ४०
अर्थिनां भूरीभावाच्च देयत्वाच्च महात्मनाम्
श्रेयान् परिग्रहो राज्ञां सर्वेषां ब्राह्मणादृते ४१
ब्राह्मणश्चैव राजा च द्वावप्येतौ दृढव्रतौ
नानयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षतोः ४२
धर्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन्
मध्यमेव धनं प्राहुस्तीक्ष्णस्यापि महीपतेः ४३
यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः
स पर्यायेण यातीमान्नरकानेकविंशतिम् ४४
शुचीनामशुचीनां च संनिपातो यथाम्भसाम्
समुद्रे समतां याति तद्वद्राज्ञो घनागमः ४५
यथा ह्यग्नौ स्थितं दीप्ते शुद्धिमायाति काञ्चनम्
एवं धनागमाः सर्वे शुद्धिमायान्ति राजसु ४६
य एव कश्चित्स्वद्रव्यं ब्राह्मणेभ्यः प्रयच्छति
तद्राज्ञाप्यनुमन्तव्यमेष धर्मः सनातनः ४७
अन्यप्रकारादुचिताद्भूमेः षड्भागसंज्ञितात्
बलिः स तस्य विहितः प्रजापालनवेतनम् ४८
शक्यं तत्पुनराहर्तुं यन्न ब्राह्मणसात्कृतम्
ब्राह्मणेभ्यस्तु यद्दत्तं न तस्य हरणं पुनः ४९
दानमध्ययनं यज्ञः कर्मास्योक्तं त्रिलक्षणम्
याजनाध्यापने वृत्तिस्तृतीयश्च प्रतिग्रहः ५०
स्वधर्मे ब्राह्मणस्तिष्ठेद्वृत्तिमाहारयेन्नृपात्
नासद्भ्यः परिगृह्णीयाद्वर्णेभ्यो नियमे सति ५१
अशुचिर्वचनाद्यस्य शुचिर्भवति मानवः
शुचिश्चैवाशुचिः सम्यक्कथं राजा न दैवतम् ५२
विदुर्य एव देवत्वं राज्ञो ह्यमिततेजसः
तस्य ते प्रतिगृह्णन्तो न लिप्यन्ते कथञ्चन ५३
लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः

हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ५४
एतानि सततं पश्येन्नमस्येदर्चयेत्स्वयम्
प्रदक्षिणं च कुर्वीत यथास्यायुः प्रवर्धते ५५

इति श्रीनारदीयधर्मशास्त्रे प्रकीर्णक नाम व्यवहारपदं सप्तदशम् ।

समाप्तं चेदं नारदीयं धर्मशास्त्रम्

अथ परिशिष्टम्

द्विविधास्तस्करा ज्ञेयाः परद्रव्यापहारिणः
प्रकाशाश्चाप्रकाशाश्च तान्विन्द्यादात्मवान्नृपः १
प्रकाशवञ्चकास्ते तु कूटमानतुलाश्रिताः
उत्कोचकाः साहसिका कितवाः पण्ययोषितः २
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः
इत्येवमादयो ज्ञेयाः प्रकाशलोकतस्कराः ३
अप्रकाशाश्च विज्ञेया बहिरभ्यन्तराश्रिताः
मुष्यां प्रसक्ताश्च नरा मुष्णन्त्याक्रम्य चैव ते ४
देशग्रामगृहघ्नाश्च यज्ञघ्ना ग्रन्थिमोचकाः
इत्येवमादयो ज्ञेयाः अप्रकाशाश्च तस्कराः ५
न त्वहोढान्विताश्चौरा वध्या राज्ञा अनागसः
सहोढान्स्तेयकारणात्क्षिप्रं चौरान्प्रशासयेत् ६
स्वदेशघातिनो ये स्युस्तथा यज्ञावरोधिनः
तेषां सर्वस्वमादाय भूयो निन्दां प्रकल्पयेत् ७
अहोढान्विमृशेच्चौरान्गृहीतान् यदि शङ्कया
भयोपधाभिश्चिन्ताभिर्ब्रूयुस्तथा यथा कृतम् ८
देशं कालं दिशं जातिं नाम वा संप्रतिश्रयम्
कृत्यं कर्मकरा वा स्युः प्रष्टव्यास्ते विनिग्रहे ९
वर्णस्वराकारभेदात्संसदि त्वनिवेदनात्
अदेशकालदृष्टत्वाद्वासस्याप्यविशोधनात् १०
असद्व्ययात्पूर्वचौर्यादसत्संसर्गकारणात्

लेख्यैरप्यवगन्तव्या न होढेनैव केवलम्  ११
दस्युवृत्ते यदि नरे शङ्का स्यात्तस्करेऽपि वा
यदि स्पृशेत लेशेन कार्यः स्याच्छपथं ततः  १२
चौराणां भक्तदा ये स्युस्तथाग्न्युदकदायकाः
आवासदा देशिकाश्च तथैवोत्तरदायकाः  १३
क्रेतारश्चैव भाण्डानां प्रतिग्राहिणः एव च
समदण्डाः स्मृतास्तु ते ये च प्रच्छादयन्ति तान्  १४
राष्ट्रेषु राष्ट्राधिकृताः सामन्ताश्चैव चोदिताः
अभ्याघाते तु मध्यस्था यथा चौरास्तथैव ते  १५
गोचरे यस्य मुष्येत तेन चौराः प्रयत्नतः
गृह्य दाप्योऽन्यथा मोषं पदं यदि न निर्गतम्  १६
निर्गते तु यदा यस्मिन्नष्टेऽन्यत्र न पातयेत्
सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत्  १७
गृहे वै मुषिते राजा चौरग्राहांस्तु दापयेत्
आरक्षकान्राष्ट्रिकांश्च यदि चौरो न लभ्यते  १८
यदि वा दोषकर्तैष तस्मिन्मोषे तु संशयः
मुषितः शपथं शाप्यो मोषे वै शुद्धिकारणात्  १९
अचौरो बोधितो मोषं चौरो वै शुद्ध्यकारणात्
चौरे लब्धे लभेयुस्ते द्विगुणं प्रतिपादिताः  २०
चौरहृतं प्रपद्यैव सरूपं प्रतिपादयेत्
तदभावे तु मूल्यं स्याद्दण्डं दाप्यश्च तत्समम्  २१
काष्ठकाण्डतृणादीनां मृन्मयानां तथैव च
वेणुवैणवभाण्डानां वेतसस्यास्थिचर्मणोः  २२
शाकहरितमूलानां हरणे तृणपुष्पयोः
गोरसेक्षुविकाराणां तथा लवणतैलयोः  २३
पक्वान्नानां कृतान्नानां मद्यानामामिषस्य च
सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः  २४
तुलाधरिममेयानां गणिमानां च सर्वतः

एभ्यस्तूत्कृष्टमूल्यानां मूल्यादष्टगुणो दमः २५
धान्यं दशम्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः
न्यूनं वैकादशगुणं दण्डं दाप्योऽब्रवीन्मनुः २६
सुवर्णरजतादीनामुत्तमानां च वाससाम्
रत्नानां चैव मुख्यानां शतादभ्यधिके वधः २७
पुरुषं हरतः पात्यो दण्ड उत्तमसाहसः
सर्वस्वं स्त्रीं तु हरतः कन्यां तु हरतो वधः २८
महापशूंस्तु नयतो दण्ड उत्तमसाहसः
मध्यमो मध्यमपशुं पूर्वः क्षुद्रपशुं हरन् २९
चतुर्विंशावरः पूर्वः परं षन्नवतिर्भवेत्
चतुःशतपरो यश्च मध्यमो द्विशतावरः ३०
सहस्त्रं तूत्तमो ज्ञेयः परः पञ्चशतावरः
त्रिविधः साहसेष्वेवं दण्डः प्रोक्तः स्वयम्भुवा ३१
प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वधः
द्वितीये चैव तज्ज्ञेयं दण्डः पूर्वस्तु साहसः ३२
गोषु ब्राह्मणसंस्थासु स्थूरायाश्छेदनं भवेत्
दासीं तु हरतो नित्यमर्धपादविकर्तनम् ३३
येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते
तत्तदेवास्य च्छेत्तव्यं तन्मनोरनुशासनम् ३४
गरीयसि गरीयांसमगरीयसि वा पुनः
स्तेने निपातयेद्दण्डं न यथा प्रथमे तथा ३५
दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्
त्रिषु वर्णेषु यानि स्युर्ब्राह्मणस्त्वक्षतः सदा ३६
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ३७
अपराधं परिज्ञाय देशकालौ च तत्त्वतः
सारानुबन्धावालोक्य दण्डानेतान्प्रकल्पयेत् ३८
न मित्रकारणाद्राज्ञो विपुलाद्वा धनागमात्

उत्स्रष्टव्यः साहसिकस्ताक्तात्मा मनुरब्रवीत्  ३९
यावानवध्यस्य वधे तावान्वध्यस्य मोक्षणे
भवत्यधर्मो नृपतेर्धर्मस्तु विनियच्छतः  ४०
न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्
निर्वास्यं कारयेत्काममिति धर्मो व्यवस्थितः  ४१
सर्वस्वं वा हरेद्राजा चतुर्थं वावशेषयेत्
एतेभ्योऽनुस्मरन्धर्मं प्राजापत्यमिति स्थितिः  ४२
ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने  ४३
गुरुतल्पे भगः कार्यः सुरापाने ध्वजः स्मृतः
स्तेये तु श्वपदं कृत्वा शिखिपित्तेन पूरयेत्  ४४
अशिराः पुरुषः कार्यो ललाटे ब्रह्मघातिनः
असम्भाष्यश्च कर्तव्यस्तन्मनोरनुशासनम्  ४५
राजा स्तेनेन गन्तव्यो मुक्तकेशेन धावता
आचक्षाणेन तत्स्तेयमेवं कर्मास्मि शाधि माम्  ४६
अनेना भवति स्तेनः स्वकर्मप्रतिपादनात्
राजा ततः स्पृशेदेनमुत्सृजेत्तु ह्यकिल्विषम्  ४७
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा  ४८
शासनाद्वा विमोक्षाद्वा स्तेनो मुच्यति किल्विषात्
अशासनात्तु तद्राजा स्तेनस्याप्नोति किल्बिषम्  ४९
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम्
अतः प्रच्छन्नपापानां शास्ता वैवस्वतो यमः  ५०
अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम्
द्विरष्टापाद्यं वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु  ५१
ब्राह्मणस्य चतुःषष्टीत्येवं स्वायम्भुवोऽब्रवीत्
विद्यापि च विशेषेण विद्वत्स्वभ्यधिकं भवेत्  ५२
शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः

शारीरं दशधा प्रोक्तमर्थदण्डस्त्वनेकधा  ५३
काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च
शारीरः संनिरोधादिर्जीवितान्तस्तथैव च  ५४
काकिण्यादिस्तु यो दण्डः स तु माषावरः स्मृतः
माषावराद्योऽयं प्रोक्तः कार्षापणपरस्तु सः  ५५
कार्षापणावराद्यस्तु चतुःकार्षापणावरः
द्व्यवरोऽष्टापरश्चान्यस्त्र्यवरो द्वादशोत्तरः  ५६
कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते
पणैर्निबद्धः पूर्वस्यां विंशतिस्तु पणः स तु  ५७
माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु
काकणी तु चतुर्भागो माषस्य च फलस्य च  ५८
पाञ्चनद्याः प्रदेशे तु संज्ञा या व्यावहारिकी
कार्षापणप्रमाणं तु निबद्धमिह नैतया  ५९
कार्षापणोऽण्डिका ज्ञेया ताश्चतस्त्रस्तु धानकः
तत् द्वादशसुवर्णस्तु दीनाराख्यः स एव च  ६०
वार्तां तु यां चाप्यथ दण्डनीतिम्  ।
राजानुवर्त्तेत सदाप्रमत्तः  ।
हन्यादुपायैर्निपुणैर्गृहीतान्
तयैव शास्तेव निगृह्य पापान्  ६१

इति नारदप्रोक्तायां संहितायां चौरप्रतिषेधो नाम प्रकरणं समाप्तम्

समाप्तं चेदं नारदीयं धर्मशास्त्रम्

Reference:
Śāstrī, Heramba Chatterjee, ed., *Nārada-Smṛti, The Institutes of Nārada*, (Sanskrit College: Calcutta, 1988).